(3) श्रुतवान् इमं संवादं गुह्यतमं परं योगम् । योगार्थत्वात् ग्रन्थोऽपि योगः । संवादमिमं योगमेव वा । योगेश्वरात् कृष्णात् साक्षात् कथयतः स्वयम्, न परम्परया ॥ भा. १८–७५, पा. २९९.
इति ॥

## भगवतो योगो नाम ऐश्वर्यम् –

१४. क्वचित्तु भगवतो 'योगः' इति तस्य योगैश्वर्यशक्त्यतिशय उच्यते । तद्यथा –

(१) न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम् ॥ ९–५.

(२) एतां विभूतिं योगं च मम यो वेत्ति तत्त्वतः ।
सोऽविकम्पेन योगेन युज्यते नात्र संशयः ॥ १०–७.

(३) विस्तरेणात्मनो योगं विभूतिं च जनार्दन ।
भूयः कथय तृप्तिर्हि शृण्वतो नास्ति मेऽमृतम् ॥ १०–१८.

(४) न तु मां शक्यसे द्रष्टुमनेनैव स्वचक्षुषा ।
दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरम् ॥ ११–८.

अत्र सर्वत्रापि भगवतो घटनं योगशक्त्यतिशयो वा योग इत्युच्यते–इति स्पष्टम् । द्वितीयोदाहरणे 'अविकम्पेन योगेन' इति सम्यग्दर्शनलक्षणे योगे अप्रच्युतस्थितिरुच्यत इति विशेषः ॥

## उपासनमपि क्वचिद् योगशब्दव्यपदेश्यः –

१५. यथैव कर्मध्यानभक्तियोगाः परमार्थयोगार्थत्वाद् योगशब्देन निर्दिश्यन्ते तथैव भावनात्मकोपासनमपि योगशब्देन व्यपदिश्यतेऽत्र–

(१) संन्यासस्तु महाबाहो दुःखमाप्तुमयोगतः ।
योगयुक्तो मुनिर्ब्रह्म न चिरेणाधिगच्छति ॥ ५–६.

( अत्र कर्मयोगो विवक्षितः । )

अत्रार्जुनेन

संन्यासं कर्मणां कृष्ण पुनर्योगं च शंससि ।
यच्छ्रेय एतयोरेकं तन्मे ब्रूहि सुनिश्चितम् ॥ ५-१.

इति पृष्टो भगवान् निर्णयमाह –

सांख्ययोगौ पृथग् बालाः प्रवदन्ति न पण्डिताः ।
एकमप्यास्थितः सम्यगुभयोर्विन्दते फलम् ॥ ५-४.

इति । अत्र च भाष्यम् –

(1) यद्यप्यर्जुनेन संन्यासं कर्मयोगं च केवलम् अभिप्रेत्य प्रश्नः कृतः, भगवांस्तु तदपरित्यागेनैव स्वाभिप्रेतं च विशेषं संयोज्य शब्दान्तरवाच्यतया प्रतिवचनं ददौ 'सांख्ययोगौ' इति । तावेव संन्यासकर्मयोगौ ज्ञानतदुपायसमबुद्धित्वादिसंयुक्तौ सांख्ययोगशब्दवाच्यौ -इति भगवतो मतम् ॥

इति । अतः प्रकरणसमालोचनया 'संन्यासस्तु' इति श्लोके संन्यासशब्देन सांख्यशब्दवाच्या ज्ञाननिष्ठा प्रोक्ता, योगशब्देन च कर्मयोगः – इत्यवगच्छामः ॥

(२) यत्र काले त्वनावृत्तिमावृत्तिं चैव योगिनः ।
प्रयाता यान्ति तं कालं वक्ष्यामि भरतर्षभ ॥ ८-२३.

अत्र योगिनः 'आवृत्तिम् अनावृत्तिं च यान्ति' इत्युक्त्या कर्मिणः, उपासकाश्च योगिशब्देनोक्ता इति गम्यते । उपासनालक्षणो योगस्तु एवमवतारितो भाष्ये –

(2) "(श्रुतिवचनैः) परस्य ब्रह्मणो वाचकरूपेण प्रतिमावत् प्रतीकरूपेण वा परब्रह्मप्रतिपत्तिसाधनत्वेन मन्दमध्यमबुद्धीनां विवक्षितस्योङ्कारस्योपासनं कालान्तरे मुक्तिफलमुक्तं यत्, तदेवेहापि 'कविं

पुराणमनुशासितारम्' (८-९), 'यदक्षरं वेदविदो वदन्ति' (८-११) इति चोपन्यस्तस्य परस्य ब्रह्मणः पूर्वोक्तरूपेण प्रतिपत्त्युपायभूतस्य ओंकारस्य कालान्तरमुक्तिफलमुपासनं योगधारणासहितं वक्तव्यम्, प्रसक्तानुप्रसक्तं च यत्किञ्चित् – इत्येवमर्थं उत्तरो ग्रन्थ आरभ्यते ॥

भा. ८-१२, पा. १३०.

इति । एतेन निर्विशेषब्रह्मण ओंकारद्वारेणोपासनमपि योगशब्दभाग् गीताशास्त्रे इत्याचार्यस्य मतमित्यवगम्यते । अयं तु कालान्तरावाप्यमुक्तिफलक इत्यतः प्रसक्तानुप्रसक्त्या समुपन्यस्तः न तु सांख्ययोगोपायत्वेन–इति तर्क्यते । मन्दमध्यमधियां कालान्तरेऽपि ज्ञानद्वारा मुक्तिरिति कृत्वा कथञ्चित् तदुपायत्वस्वीकारेण योगशब्दशब्दितत्वमिति स्वीकारेऽपि न दोषः । तत्र 'एकया यात्यनावृत्तिम्' (८-२६) इत्यपुनरावृत्तिफलोक्तेः 'तदाश्रयणेनैव हि सगुणशरणानामप्यनावृत्तिसिद्धिः' (सू. भा. ४-४-२२, पा. ५१२) इति सम्यग्दर्शनद्वारा क्रममुक्तिवचनादुपासकानामपि सूत्रभाष्ये इति ध्येयम् ॥

(३) आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते ।
योगारूढस्य तस्यैव शमः कारणमुच्यते ॥ ६-३.
यदा हि नेन्द्रियार्थेषु न कर्मस्वनुषज्यते ।
सर्वसङ्कल्पसंन्यासी योगारूढस्तदोच्यते ॥ ६-४.

अत्र योगारुरुक्षोः कर्म साधनम्, योगारूढस्य तु बाह्यविषयेषु कर्मसु च सङ्गरहितस्य शमः कारणम् इति विशेषकरणात् योगारूढशब्देन कर्मयोगाद् विलक्षणं मानसं योगं प्राप्त उच्यत इति गम्यते ॥

(४) यत्रोपरमते चित्तं निरुद्धं योगसेवया ।
यत्र चैवात्मनात्मानं पश्यन्नात्मनि तुष्यति ॥ ६-२०.

युञ्जन्नेवं सदाऽऽत्मानं योगी विगतकल्मशः ।
सुखेन ब्रह्मसंस्पर्शमत्यन्तं सुखमश्नुते ॥ ६-२८.

अत्र चित्तनिरोधलक्षणेन योगेन आत्मदर्शनं ब्रह्मसंस्पर्शजम् आत्यन्तिकं सुखं च लभते इत्युक्त्या पूर्वोक्तादुपासनालक्षणात् कालान्तरफलकाद् योगात्, पातञ्जलयोगाच्च चित्तनिरोधजन्यस्वरूपप्रतिष्ठालक्षणाद् विलक्षणोऽयं 'ध्यानयोगः' इति गम्यते ॥

(५) योगिनामपि सर्वेषां मद्गतेनान्तरात्मना ।
श्रद्धावान् भजते यो मां स मे युक्ततमो मतः ॥ ६-४७.

अत्र योगिनां देवतान्तरध्यायिनः, भगवद्ध्यायिनश्च – इति द्वेधा विभागकरणम्, भगवद्भक्तियुक्तानां युक्ततमत्वं चेति भक्तियोगशब्द-वाच्योऽपि कश्चिद् योगः परामृष्टः ॥

## योगपदार्थविवेकोपसंहारः –

१६. तदेवं गीताशास्त्रे योगशब्दस्य ज्ञाननिष्ठायां मुख्यवृत्त्या, कर्मध्यानादिषु च तादर्थ्यात् गौण्या वृत्त्या प्रवृत्तिः– इति भगवत्पादीयं मतम् । एवं च सति –

(१) एषा तेऽभिहिता सांख्ये बुद्धिर्योगे त्विमां श्रृणु ।
बुद्ध्या युक्तो यया पार्थ कर्मबन्धं प्रहास्यसि ॥ २-३९.

इति दृष्टिद्वयमात्रमाश्रित्य साधनविभागोपदेशो भगवता उपपद्यते ॥

(२) न हि ज्ञानेन सदृशं पवित्रमिह विद्यते ।
तत् स्वयं योगसंसिद्धः कालेनात्मनि विन्दति ॥ ४-३८.

इति योगमात्रस्य ज्ञानकारणत्वोक्तिर्श्रैवमेवोपपन्नं भवति । अत एवात्र प्रथमोदाहृतवाक्ये भाष्यम् –

(1) सांख्ये परमार्थवस्तुविवेकविषये बुद्धिर्ज्ञानम्, साक्षात् शोकमोहादिसंसारहेतुदोषनिवृत्तिकारणम् । योगे तु तत्प्राप्त्युपाये निःसङ्गतया द्वन्द्वप्रहाणपूर्वकम् ईश्वराराधनार्थे कर्मयोगे कर्मानुष्ठाने, समाधियोगे च इमाम् अनन्तरमेवोच्यमानां बुद्धिं शृणु ॥ पा. २७.

इति । द्वितीयोदाहरणगतं भाष्यं च –

(2) तज्ज्ञानं स्वयमेव योगसंसिद्धः, योगेन कर्मयोगेन समाधियोगेन च, संसिद्धः संस्कृतः, योग्यताम् आपन्नः सन् मुमुक्षुः कालेन महता आत्मनि विन्दति लभत इत्यर्थः ॥ पा. ८०.

इति ॥

योगदर्शनेऽनुमतांशस्य विवेचनं तूत्तरत्र यथास्थानं (२१तमाध्याये) भवितेतीह तदुपेक्ष्य योगपदार्थविवेकमिममुपसंहरामः ॥

प्रसङ्गादिदमपि भाष्यवचनं स्मर्तव्यं सांख्ययोगपदार्थविवेकपरिपूर्तये –

(३) संन्यासकर्मयोगौ ज्ञानतदुपायसमत्वबुद्ध्यादिसंयुक्तौ सांख्ययोगशब्दवाच्यौ इति भगवतो मतम् ॥ भा. ५-४, पा. ८७.

[ 'संन्यासः कर्मयोगश्च' इत्यत्र कर्मपरित्यागमात्रं संन्यासः, कर्मानुष्ठानमात्रं कर्मयोगः-इति विवक्ष्यते । 'एषा तेऽभिहिता सांख्ये बुद्धिर्योगे त्विमां शृणु'(२-३९) 'सांख्ययोगौ पृथग्बालाः'(५-४)-इत्यादिस्थले तु ज्ञाननिष्ठा कर्मयोगश्च विवक्षितार्थः इति भावः ॥]

इति श्रीमत्परमहंसपरिव्राजकाचार्यवरेण्यश्रीपूज्यपादश्रीमच्छङ्करभगवच्चरणस्मरणपरिचयावाप्तवेदान्तप्रवेशेन श्रीबोधानन्देन्द्रसरस्वतीशिष्येण सच्चिदानन्देन्द्रसरस्वत्याख्येन भिक्षुणा प्रणीते गीताशास्त्रार्थविवेके योगपदार्थविवेको नाम पञ्चमोऽध्यायः

---

# ६. कर्मसंन्यासपदार्थविवेकः

## संन्यासपदार्थनिर्णयेन प्रयोजनम् –

१७. अथास्मिन् शास्त्रे कः कर्मसंन्यासो नामेति विवेचनीयम्। यतः पण्डितानामपि विप्रतिपत्तिरस्ति – किं नाम कर्मशब्दवाच्यमिह शास्त्रे ? किं शास्त्रीयाणि कर्माणि ज्ञानिभिः कर्तव्यानि न वा ? यदापि तैस्तानि क्रियन्ते तदा कथं क्रियन्ते ? ज्ञानकर्मणोः संबन्धः कीदृशः ? कर्म च कया प्रणालिकया ज्ञानस्योपकरोति ? – इत्यादिविषयेषु । अतः पदार्थविवेक एव तावत् कर्तव्यः शास्त्रार्थनिर्णयात् प्राक् ॥

## पुरुषतन्त्रे कर्मणि कर्तव्याकर्तव्यचिन्ता –

१८. कर्मशब्दस्तावत् क्रियासामान्यवाचकत्वेन प्रसिद्धो लोके । इहापि च –

(१) न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत् ॥ ३–५.

(२) शरीरयात्रापि च ते न प्रसिद्ध्येदकर्मणः ॥ ३–८.

(३) न हि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः ॥ १८–११.

इति क्रियामात्रं कर्मशब्देन व्यपदिष्टम् । तत्राशक्यपरित्यागे क्रियामात्ररूपे कर्मणि न चोदनाप्रवृत्तिरिति स्पष्टमेव । न ह्यकर्तृतन्त्रे स्वाभाविके श्वासोच्छ्वासादिरूपे कर्मणि कर्तव्याकर्तव्यचिन्ता भवति । यत्र तु पुरुषतन्त्रा प्रवृत्तिः, तत्रेदमुपदिश्यते –

(४) यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः ।
न स सिद्धिमवाप्नोति न सुखं न परां गतिम् ॥ १६-२३.

इति । स्वेच्छाप्रवृत्तिर्नैहिकफलाय न चामुष्मिकफलाय – इत्यर्थः । अत एवोपसंहरति –

(५) ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि ॥ १६-२४.

इति ॥

सर्वकर्मसंन्यासः –

१९. शास्त्रीयकर्मणां परित्यागमात्रं संन्यासशब्देन निर्दिष्टं क्वचित् । क्वचित्तु विधिना परित्यागः । यथा –

(१) न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते ।
न च संन्यसनादेव सिद्धिं समधिगच्छति ॥ ३-४.

अत्र कर्मणामनारम्भो न नैष्कर्म्याय – इत्युक्तेर्नैष्कर्म्यलक्षणं कर्मशून्यत्वं पुरुषार्थोऽपि भवतीति गम्यते । न च 'संन्यसनादेव' इत्येवकारात् किञ्चिद्धर्मविशिष्टात् संन्यासात् सिद्ध्यधिगमः स्यादिति भावः सूच्यते ॥

(२) योगसंन्यस्तकर्माणं ज्ञानसंछिन्नसंशयम् ।
आत्मवन्तं न कर्माणि निबध्नन्ति धनञ्जय ॥ ४-४१.

अत्र योगेन संन्यासः कर्मणाम् अबन्धायेत्युक्तम् ॥

(३) संन्यासः कर्मयोगश्च निःश्रेयसकरावुभौ ।
तयोस्तु कर्मसंन्यासात् कर्मयोगो विशिष्यते ॥ ५-२.

अत्र कर्म न क्रियामात्रं किं तु शास्त्रीयम् । तत्र कर्मणां संन्यसनम् तदनुष्ठानं च – इत्युभयमपि मोक्षदायकम् ; तत्र मुमुक्षूणां ज्ञानरहित-केवलसंन्यासापेक्षया कर्मानुष्ठानं प्रशस्यतरमित्युक्तम् ॥

(४) अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणः फलम् ।
भवत्यत्यागिनां प्रेत्य न तु संन्यासिनां क्वचित् ॥ १८-१२.

अत्र शास्त्रविहितं निषिद्धं च स्वानुरूपं फलं ददाति लौकिकानाम्, परमार्थसंन्यासिनां तु न कर्मफलसंबन्धः – इत्युक्तम् ॥

२०. कर्मसंन्यासोऽपि विद्यते कश्चित् तादृशो येन कर्मफलं नैवारप्स्यत इत्युक्तम् ॥

(५) सर्वकर्माणि मनसा संन्यस्यास्ते सुखं वशी ।
नवद्वारे पुरे देही नैव कुर्वन्न कारयन् ॥ ५-१३.

अत्र 'नैव कुर्वन्न कारयन्' इत्यवधारणात् कर्ममात्रसंन्यासः कश्चिदवगम्यते । यद्यप्यत्र भाष्ये 'नित्यं नैमित्तिकं काम्यं प्रतिषिद्धं च' इति विशेषणं दृश्यते । तथापि 'कर्मादावकर्मसंदर्शनेन परित्यज्य' इति वचनात् अविशेषेण सर्वकर्मसंन्यास एव विवक्षित इति गम्यते । तदेवं संन्यासशब्दस्त्यागापरपर्यायः विहितकर्मैकदेशत्यागे, सर्वकर्मसंन्यासे च प्रयुज्यतेऽत्रेति स्थितम् । संन्यासतत्त्वं तु कर्मसंन्यासविवेके (अ. १३) ज्ञानयोगविवेके च (अ. १६) अधिगन्तव्यम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यवरेण्यश्रीपूज्यपादश्रीमच्छङ्करभगवच्चरणस्मरण-
परिचयावाप्तवेदान्तप्रवेशेन श्रीबोधानन्देन्द्रसरस्वतीशिष्येण
सच्चिदानन्देन्द्रसरस्वत्याख्येन भिक्षुणा प्रणीते
गीताशास्त्रार्थविवेके संन्यासपदार्थविवेको नाम षष्ठोऽध्यायः

---

# ७. ध्यानोपासनपदार्थविवेकः

**प्रकरणसंगतिः –**

२१. गीताशास्त्रे सांख्यबुद्धिः, योगबुद्धिश्च – इति द्वे बुद्धी आश्रित्य ज्ञानयोगेन निष्ठा, मोक्षसाधनानुष्ठानेन निष्ठा च–इति निष्ठा-द्वयम् उच्यते । तत्र योगशब्दो यद्यपि मुख्यवृत्त्या ज्ञाने एव वर्तते, तथापि कर्मध्यानादिष्वपि तादर्थ्यात् प्रयुज्यत इति चावोचाम (१६) । तत्र तादर्थ्यात् योगशब्दशब्दितेषु विषयेषु मध्ये कर्मपदार्थो विविच्य निरूपितः; तत्प्रसङ्गेन संन्यासपदार्थश्च । अथ ध्यानपदार्थो निरूपणीयः । शास्त्रे हि ध्यानोपासनशब्दौ तत्र तत्र प्रयुज्येते । तत्र गौणमुख्यार्थविवेचनं कथम् इति निर्धारणीयं भवति, किं त्यागसंन्यास-शब्दाविवानयोरपि एकार्थतैव, किं वा अर्थभेदोऽपि विद्यते ?–इति ॥

**ध्यानम्, आत्मदर्शनकरणरूपम् –**

२२. तत्र ध्यानशब्दार्थ एव तावच्चिन्त्यते –

(१) ध्यानेनात्मनि पश्यन्ति केचिदात्मानमात्मना ।
अन्ये सांख्येन योगेन कर्मयोगेन चापरे ॥ १३-२४.
अन्ये त्वेवमजानन्तः श्रुत्वाऽन्येभ्य उपासते ।
तेऽपि चातितरन्त्येव मृत्युं श्रुतिपरायणाः ॥ १३-२५.

अत्र ध्यानम् आत्मदर्शनसाधनत्वेनोपदिष्टमिति स्पष्टम् । 'पश्यन्ति' इति वचनात् । तथा च भाष्ये व्याख्यातम् आचार्येण –

(1) "ध्यानं नाम शब्दादिभ्यो विषयेभ्यः श्रोत्रादीनि करणानि मनसि उपसंहृत्य मनश्च प्रत्यक्चेतयितरि, एकाग्रतया यच्चिन्तनम्,

तद् ध्यानम् । तथा 'ध्यायतीव बकः', 'ध्यायतीव पृथिवी', 'ध्यायन्तीव पर्वताः' (छां.) – इत्युपमोपादानात् तैलधारावत् सन्ततो अविच्छिन्नप्रत्ययो ध्यानम् । तेन ध्यानेन आत्मनि बुद्धौ पश्यन्ति आत्मानं प्रत्यक्चेतनम् आत्मना स्वेनैव प्रत्यक्चेतनेन ध्यानसंस्कृतेन अन्तःकरणेन केचिद् योगिनः ॥" भा. पा. २१२.

इति । अत्र 'ध्यानसंस्कृतेनान्तःकरणेन केचिद् योगिन आत्मानं पश्यन्ति' इति न योजना । न हि 'मनसा पश्यन्ति' इत्यभिप्राये सति 'आत्मानं प्रत्यक्चेतनम् आत्मना स्वेनैव प्रत्यक्चेतनेन' इत्युक्तिः संगच्छते । 'मनसो मनः' (के. १–२) इत्यादिश्रुतिवचनानि च विरुध्येरन्, यथाश्रुतार्थस्वीकारे । अतः 'श्रोत्रादीनि करणानि मनस्युपसंहृत्य, मनश्च प्रत्यक्चेतयितरि' इत्युपक्रमानुसारेण ध्यान-संस्कृतेन मनसा प्रत्यक्चेतयित्रभिन्नेन इति व्याख्येयम् । अथवा 'प्रत्यक्चेतनेन' इत्यधिकः पाठः । सर्वकोशेषु अदर्शनात् । पश्यन्ति इति तु अनुभवन्तीत्यर्थकम् । यथाश्रुते कर्मकर्तृत्वविरोधप्रसङ्गात् – इत्यन्यदेतत् ॥

## विद्यमानाविद्यमानोभयसाधारणविषयकं स्मरणमपि ध्यानम् –

२३. अथास्य ध्यानशब्दस्य अन्योऽप्यर्थो लोके प्रसिद्धः 'ध्यायति प्रोषितनाथा भर्तारम्' इत्यादिस्थलेषु । तत्र हि ध्यानं न पतिदर्शनसाधनम्, अपि तु तद्विरहात् तद्दर्शनार्थमौत्कण्ठ्यात् सततं तत्स्मरणमात्रम् । 'ध्यायतीव बकः' इत्यादिषूदाहरणेषु निश्चलतया मनसो धारणं विवक्षितम् । इदं तु केवलं सातत्येन चिन्तनमात्रम् विद्यमानाविद्यमानान्यतरविषयकम् इति विवेकः । ध्यायति हि विधुरो

मृतामपि स्वां कान्ताम् । अस्मिन्नप्यर्थे गीतासु ध्यानशब्दप्रयोगोऽस्ति । यथा –

(१) ध्यायतो विषयान् पुंसः सङ्गस्तेषूपजायते ॥ २-६२.

इत्यत्र । अत्र हि संनिहितान् असंनिहितान् वा विषयान् पुरुषः समुद्बुद्धपूर्वानुभवजनितसंस्कारो यद् ध्यायति तत् सङ्गस्य कारणम् इत्युच्यते । न च ध्यानान्मनोरथमात्रारूपात् चिन्तितदर्शनमेकान्ततो जायते । अत एव हि ध्यानात् सङ्गद्वारेण सञ्जातः कामः प्रतिहतः क्रोधरूपेण परिणमते इत्युक्तं वाक्यशेषे इति ॥

## शास्त्रचोदितं चिन्तनमपि ध्यानशब्दार्थः –

२४. अथ शास्त्रविहितमदृष्टफलकमपि ध्यानमस्ति गीतासु परामृष्टम् । तद्यथा –

(१) ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः ।
अनन्येनैव योगेन मां ध्यायन्त उपासते ॥ १२-६.
तेषामहं समुद्धर्ता मृत्युसंसारसागरात् ।
भवामि न चिरात् पार्थ मय्यावेशितचेतसाम् ॥ १२-७.

अत्र हि विश्वरूपं नारायणं तदेकचित्ततया ये ध्यायन्ति, तानहं संसारसागरादुद्धर्ता – इति आदरनैरन्तर्ययुक्तं चित्तसमाधानं अदृष्टफलं विवक्षति भगवान् –

(२) निवसिष्यसि मय्येव अत ऊर्ध्वं न संशयः ॥ १२-८.

इति ब्रुवन् । तदेवं परोक्षमपि वस्तु पुरा अनुभूतम् अननुभूतं वा, स्वेच्छयैव शास्त्रविहितमिति कारणेन सातत्येन चिन्तनमपि ध्यान-

शब्दार्थः । तत्र विषयचिन्तनमनर्थाय, भगवद्ध्यानं तु पुरुषार्थाय – इत्युपदिष्टमत्रेतीयान् विशेषः ॥

## प्राप्तज्ञानस्य नियमनार्थमनुचिन्तनमपि ध्यानम् –

२५. अथ वस्तुज्ञाननान्तरीयकमपि भवेत् तद्ध्यानं लोके तद्गुणाननुस्मरतः । तदपीह ध्यानशब्दार्थत्वेन निर्दिष्टं दृश्यते यथा –

श्रेयो हि ज्ञानमभ्यासाज्ज्ञानाद् ध्यानं विशिष्यते ॥ १२-१२.

इति । अत्र हि विवेकपूर्वकाभ्यासजन्यं ज्ञानमनु यदात्मानुस्मरणम्, तद् ध्यानशब्देनोदितमिति नैतत् साधनरूपं ध्यानम्, किं तु वस्तुस्वभावोत्कर्षबलात् स्वतः प्राप्तं निरन्तरचिन्तनमिति स्पष्टम् ॥

## उपासनं नाम कर्तृतन्त्रं चिन्तनम् –

२६. अथेदानीम् उपासनशब्दार्थो विवेचनीयः । तत्रोपासनशब्दो वस्तुतन्त्रज्ञानविलक्षणे चोदनातन्त्रे पुरुषतन्त्रे च चिन्तने प्रसिद्धो लोकवेदयोः । तद्यथा – लोके तावत् 'राजानमुपास्ते' इत्यादिस्थले । तथा वेदेऽपि 'तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते' (के. १-५, ६, ७) इति वाङ्मनसातीते वाङ्मनसयोरपि विषयिणि स्वतःसिद्धे मुख्यतया ब्रह्मशब्दार्हत्वमुक्त्वा विषयत्वेनोपास्ये ब्रह्मणि न मुख्यवृत्तो ब्रह्मशब्दः – इत्याम्नानाद् गम्यते वस्तुतन्त्रब्रह्मज्ञानतो विलक्षणा उपासनशब्दशब्दिता क्रियेति । तथा 'वाचं धेनुमुपासीत' (बृ. ५-८-१), 'तद्ध तद्वनं नाम तद्वनमित्युपासितव्यम्' (के. ४-६), 'स यो नाम ब्रह्मेत्युपास्ते' (छां. ७-१-५) इत्यादिस्थलेषु विधानसामर्थ्याद् गम्यते दृष्टिक्षेपलक्षणपुरुषतन्त्रापि उपासना चोद्यते शास्त्रे इति ॥

एवमिहापि —

(१) इदं तु ते गुह्यतमं प्रवक्ष्याम्यनसूयवे ।
ज्ञानं विज्ञानसहितं यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ॥ ९-१.

राजविद्या राजगुह्यं पवित्रमिदमुत्तमम् ।
प्रत्यक्षावगमं धर्म्यं सुसुखं कर्तुमव्ययम् ॥ ९-२.

इति यथा ज्ञानं विद्यापराख्यं वस्तुतन्त्रमप्युपदिश्यते । तथा

(२) केषु केषु च भावेषु चिन्त्योऽसि भगवन्मया ॥ १०-१७.

इति पृष्टो भगवान् विविधवस्तूनि उपास्यतया

(३) आदित्यानामहं विष्णुर्ज्योतिषां रविरंशुमान् ।
मरीचिर्मरुतामस्मि नक्षत्राणामहं शशी ॥ १०-२१.

इत्यादिना उपदिश्य उपसंहृतवान्

(४) यद्यद् विभूतिमत् सत्त्वं श्रीमदूर्जितमेव वा ।
तत्तदेवावगच्छ त्वं मम तेजोंऽशसंभवम् ॥ १०-४१.

इति । अत्रानीश्वराणामपि नक्षत्रादीनामीश्वरत्वेन चिन्तनविधानात् पुरुषतन्त्रं ध्यानमेवोपासनमत्र विवक्षितमिति गम्यते । एवं

(५) मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते ।
श्रद्धया परयोपेतास्ते मे युक्ततमा मताः ॥ १२-२.

इति 'मत्कर्मकृन्मत्परमो मद्भक्तः' (११-५५) इत्युक्तरीत्या श्रद्धया भगवतो विश्वरूपस्य ध्यानं कर्तृतन्त्रमेवोपासनशब्देनोक्तमिति गम्यते । न हि विश्वरूपोपासकानां तद्विषयं यथावस्तुज्ञानमपि ध्यानानुष्ठाने अपेक्ष्यत इति शक्यं वक्तुमिति ॥

5

ज्ञानपर्यायोऽप्यस्त्युपासनशब्दः –

२७. उपासनशब्दो यथास्थितवस्तुविषयकज्ञानपर्यायतयापि प्रयुक्तोऽस्ति श्रुतिषु । तद्यथा –

स योऽत एकैकमुपास्ते न स वेदाकृत्स्नो ह्येषोऽत एकैकेन भवत्यात्मेत्येवोपासीत ॥ बृ. १–४–७.

इत्यत्र 'पश्यामि', 'शृणोमि', 'स्पृशामि' इति वा यावद् वेद तावदेकैकेन विशेषेण विशिष्टो भवति । तस्मात् कृत्स्नवित्त्वाय 'आत्माऽहम्' इत्येव विद्यात् – इत्यात्मदर्शनलक्षणं ज्ञानं कृत्स्नवित्त्वसंपादकमित्युच्यते । अतस्तत्र 'उपास्ते' इति 'वेद' इत्यस्मिन्नर्थे प्रयुक्तम् इति ज्ञायते । 'अनेन ह्येतत् सर्वं वेद' इति वाक्यशेषेण सर्वज्ञत्वफलसंकीर्तनात् ॥

एवमिहापि –

(१) ज्ञानयज्ञेन चाप्यन्ये यजन्तो मामुपासते ।
एकत्वेन पृथक्त्वेन बहुधा विश्वतोमुखम् ॥ ९–१५.

इति ज्ञानेन यथावस्तुचिन्तनमेवोच्यते उपासनशब्देन । यथा व्याख्याति स्म भाष्यकृत् –

(1) ज्ञानमेव भगवद्विषयं यज्ञः । तेन ज्ञानयज्ञेन यजन्तः पूजयन्तो माम् ईश्वरं चापि अन्ये अन्यामुपासनां परित्यज्य उपासते । तच्च ज्ञानं 'एकत्वेन एकमेव परं ब्रह्म' इति परमार्थदर्शनेन यजन्त उपासते ॥ भा. ९–१५, पा. १४२.

इति । एवम् –

(२) ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते ।
सर्वत्रगमचिन्त्यं च कूटस्थमचलं ध्रुवम् ॥ १२–३.

इत्यारभ्य

ते प्राप्नुवन्ति मामेव सर्वभूतहिते रताः ॥ १२-४.

इत्येतदन्तेन अक्षरविषयकं यथोक्तं प्राप्तमेवानुसन्धानं ज्ञानिनामुपासन-शब्देनोच्यते। न हि प्रत्यस्तमितसर्वविशेषं ब्रह्म ध्यानक्रियारूपोपासना-विषयम् इत्युपपद्यते। निर्विशेषं च ब्रह्म इह प्रकृतमिति। 'अनिर्देश्यम्', 'अव्यक्तम्', 'सर्वत्रगम्', 'अचिन्त्यम्', 'कूटस्थम्', 'अचलम्', 'ध्रुवम्' इत्यादिविशेषणादानादेवमित्यवगम्यते। अत एवाह भाष्यकारः –

(2) न तु तेषां वक्तव्यं किञ्चिन्मां ते प्राप्नुवन्तीति। 'ज्ञानी त्वात्मैव मे मतम्' इति ह्युक्तम्। न हि भगवत्स्वरूपाणां सतां युक्ततमत्वम् अयुक्ततमत्वं वा वाच्यम् ॥ भा. पा. १८२.

इति। तस्मात् 'आत्मरतिरात्मक्रीडः' (छां. ७-२५-२) इत्यादि-श्रुतिवदेवेह 'अक्षरमुपासते' इति प्राप्तमेव चिन्तनमनूद्यते इति सिद्धम् ॥

उपासनशब्दपर्यायाः –

२८. पुरुषतन्त्रक्रियारूपमुपासनं चिन्तनस्मरणभावनादिशब्दै-रप्युपदिष्टमत्र। तद्यथा –

(१) यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेवरम्।
तं तमेवैति कौन्तेय सदा तद्भावभावितः ॥ ८-६.

इति। सदा तद्भावभावितत्वम् अजस्रचिन्तनरूपोपासनानिष्ठत्वमुच्यते। स्मरणशब्दोऽपि तद्वृत्त्यैवेति ज्ञेयम्। 'चिन्त्योऽसि भगवन्मया' इति चिन्तनशब्देनास्य निर्देश उदाहृत एव पूर्वम् ॥

(२) ओमित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन् ।
यः प्रयाति त्यजन् देहं स याति परमां गतिम् ॥ ८-१३.
अनन्यचेताः सततं यो मां स्मरति नित्यशः ।
तस्याहं सुलभः पार्थ नित्ययुक्तस्य योगिनः ॥ ८-१४.

अत्र 'यदक्षरं वेदविदो वदन्ति' इत्युपक्रम्य निर्गुणब्रह्मोपासनमेव स्मरणशब्देनोक्तमिति गम्यते ॥

## उपासनशब्दे सर्वत्रानुगतोऽर्थः –

२९. तदेवम् उपासनशब्दो यद्यपि बह्वर्थक इति तत्तत्प्रकरणसामर्थ्यनिरूपणेनावगम्यते, तथापि तुल्यप्रत्ययप्रवाहतारूपं नैव क्वचिद् व्यभिचरति । यथाह भाष्यकृत् –

(1) उपासनं नाम ?–यथाशास्त्रम् उपास्यस्यार्थस्य विषयीकरणेन सामीप्यम् उपगम्य तैलधारावत् समानप्रत्ययप्रवाहेण दीर्घकालं यदासनम्, तदुपासनमाचक्षते ॥ भा. १२-३, पा. १८२.

इति । एतच्च लक्षणं ग्रन्थस्य द्वितीयभागे तत्र तत्रार्थे संगमय्य दर्शयिष्याम इत्यास्तां तावत् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यवरेण्यश्रीपूज्यपादश्रीमच्छङ्करभगवच्चरणस्मरण-
परिचयावाप्तवेदान्तप्रवेशेन श्रीबोधानन्देन्द्रसरस्वतीशिष्येण
सच्चिदानन्देन्द्रसरस्वत्याख्येन भिक्षुणा प्रणीते
गीताशास्त्रार्थविवेके ध्यानोपासनपदार्थविवेको नाम सप्तमोऽध्यायः

---

# ८. भक्तिपदार्थविवेकः

पूज्यविषयं प्रेम भक्तिशब्दवाच्यम् –

३०. अथ भक्तिपदार्थो विवेचनीयः । यद्यपि भजिः सेवाकर्मक इति धातुपाठादवगम्यते, तथापि पूज्यविषयकं प्रेमैव तच्छब्दवाच्यम्, तादृशप्रेमयुक्ता वृत्तिरेव च प्रायेण भक्तिशब्दार्थ इति शिष्टप्रयोगादवगम्यते । गीतासु च तथैव प्रयोगो भक्तिशब्दस्य । तत्रोदाहरणानि –

(१) यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति ।
तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् ॥ ७-२१.

अत्र तं तं देवताविशेषं प्रीतिपूर्वकमर्चितुमिच्छन् साधकः तत्तद्देवताभक्त इत्युक्तम् ॥

(२) मत्कर्मकृन्मत्परमो मद्भक्तः सङ्गवर्जितः ।
निर्वैरः सर्वभूतेषु यः स मामेति पाण्डव ॥ ११-५५.

एवं सततयुक्ता ये भक्तास्त्वां पर्युपासते ।
ये चाप्यक्षरमव्यक्तं तेषां के योगवित्तमाः ॥ १२-१.

अत्र विश्वरूपप्रकारे परमेश्वरे प्रीतिमानित्यर्थे भक्तशब्दः प्रयुक्तः ॥

(३) य इमं परमं गुह्यं मद्भक्तेष्वभिधास्यति ।
भक्तिं मयि परां कृत्वा मामेवैष्यत्यसंशयः ॥ १८-६८.

अत्र भगवद्भक्तेष्वेव भक्तशब्दः प्रयुक्तः । भक्तिश्च भगवद्विषयैव ॥

## ज्ञानिनो भगवति निष्ठा, भगवत्कृतानुग्रहश्च भजनम् –

३१. ज्ञान्यपि भगवद्भक्तेषु परिगणितोऽत्र । भगवदनुग्रहोऽपि भजनशब्देन अभिहितः ॥

(१) चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन ।
आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ ॥ ७–१६.
उदाराः सर्वे एवैते ज्ञानी त्वात्मैव मे मतम् ॥ ७–१८.

अत्र भगवन्तमात्मभावेन भजन्नपि ज्ञानी भक्त इत्युच्यते । तेन प्रेमपूर्वकं प्रणिधानमेव भजनं न तु नियमेन स्वामिन इव भृत्यकर्तृकसेवा – इति गम्यते ॥

(२) ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम् ॥ ४–११.

अत्र 'यथा' इति सप्तमाध्यायस्य षोडशश्लोकोक्तानां प्रकाराणाम् आकर्षणार्थम् । तथा हि भाष्यम् –

(1) ये फलार्थिनः, तान् फलप्रदानेन, यो यथोक्तकारिणस्तु अफलार्थिनो मुमुक्षवश्च तान् ज्ञानप्रदानेन, ये ज्ञानिनः संन्यासिनो मुमुक्षवश्च तान् मोक्षप्रदानेन ; तथा आर्तान् आर्तिहरणेन – इत्येवं यथा प्रपद्यन्ते ये तान् तथैव भजामीत्यर्थः ॥ भा. पा. ६४.

इति । अत्र भगवत्कर्तृकं भजनम् अनुग्रह एवेति स्पष्टम् । आह च भाष्यकृत् 'तान् तथैव तत्फलदानेन भजामि । अनुगृह्णामीत्येतत्' इति ॥

## प्रपत्तिरपि भक्तिविशेष एव –

३२. अधस्तादुदाहृतवाक्ये 'ये यथा मां प्रपद्यन्ते' इत्यत्रोक्ता प्रपत्तिरपि पूज्यबुद्ध्या शरणागतिरेवेत्यसावपि भक्तिविशेष एव । अतः

ये यथा येन प्रकारेण यं फलमुद्दिश्य मां प्रपद्यन्ते मां शरणं गच्छन्ति इत्यर्थः । तथा अन्यत्रापि प्रपत्तिर्वर्णिता –

(१) तमेव चाद्यं पुरुषं प्रपद्ये यतः प्रवृत्तिः प्रसृता पुराणी ॥ १५–४.

अत्र भाष्यम् –

(1) आद्यं आदौ भवं पुरुषं प्रपद्ये इत्येवं परिमार्गितव्यं तच्छरणतया इत्यर्थः ॥ भा. पा. २३०.

(२) मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥ ७–१४.

(३) न मां दुष्कृतिनो मूढाः प्रपद्यन्ते नराधमाः ॥ ७–१५.

(४) कामैस्तैस्तैर्हृतज्ञानाः प्रपद्यन्तेऽन्यदेवताः ॥ ७–२०.

(५) बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते ॥ ७–१९.

ज्ञानिकर्तृका चेयं शरणागतिर्भगवदात्मभावेन । तदात्मभावेन तन्निष्ठैवेति वक्ष्यते 'मामेकं शरणं व्रज' इत्यत्र । अतस्तत्र ज्ञानभक्तिपदार्थयोरेकत्वमेवेति फलतीत्यन्यदेतत् ॥

## भक्तेर्निरतिशयसाधनत्वम् –

२३. गीताशास्त्रश्रवणे, तदुक्तानुष्ठाने च अधिकाराधायकत्वं भक्तेरेव – इति वर्ण्यतेऽत्र । साधनान्तराणां च भक्तिसंबन्धेन यथावीर्यवत्तरत्वं भवेत् तथा भक्तियोगविवेके (१५तमाध्याये) दर्शयिष्यामः ॥

(१) य इमं परमं गुह्यं मद्भक्तेष्वभिधास्यति ।
भक्तिं मयि परां कृत्वा मामेवैष्यत्यसंशयः ॥ १८-६८.

अत्र भक्तेभ्यः शास्त्रसंप्रदानं महाफलमिति संस्तुता भक्तिः । यथाह भाष्यकारः –

(1) भक्तेः पुनर्ग्रहणात् भक्तिमात्रेण केवलेन शास्त्रसंप्रदाने पात्रं भवतीति गम्यते ॥ भा॰ पा॰ २९७.

इति । अधिकं तु भक्तिज्ञानसंबन्धविवेके (१७तमाध्याये) अधिगन्तव्यमिति सर्वं शिवम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यवरेण्यश्रीपूज्यपादश्रीमच्छङ्करभगवच्चरणस्मरणपरिचयावाप्तवेदान्तप्रवेशेन श्रीबोधानन्देन्द्रसरस्वतीशिष्येण सच्चिदानन्देन्द्रसरस्वत्याख्येन भिक्षुणा प्रणीते गीताशास्त्रार्थविवेके भक्तिपदार्थविवेको नाम अष्टमोऽध्यायः

---

# १. ज्ञानपदार्थविवेकः

## आत्मानात्मविवेकलक्षणमेव मुख्यवृत्त्या ज्ञानम् –

३४. अथ क्रमप्राप्तो ज्ञानशब्दार्थविवेकः। शास्त्रेऽस्मिन् आत्मानात्मानौ विविच्य येन ज्ञायेते तदेव मुख्यवृत्त्या ज्ञानं नाम, सर्वज्ञेयविषयत्वात्। तदेव चोत्तमं ज्ञानम्। यदाह भगवान् –

(१) क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत्तज्ज्ञानं मतं मम ॥ १३–२.
(२) परं भूयः प्रवक्ष्यामि ज्ञानानां ज्ञानमुत्तमम् ॥ १४–१.

इति च। अत्र भाष्यम् –

(1) यस्मात् क्षेत्रक्षेत्रज्ञेश्वरयाथात्म्यव्यतिरेकेण न ज्ञानगोचरम् अन्यत् अवशिष्टमस्ति, तस्मात् क्षेत्रक्षेत्रज्ञयोर्ज्ञेयभूतयोर्यज्ज्ञानम्, क्षेत्रक्षेत्रज्ञौ येन ज्ञानेन विषयीक्रियेते, तज्ज्ञानं सम्यग्ज्ञानम् इति मतम् अभिप्रायो मम ईश्वरस्य विष्णोः ॥ भा॰ पा॰ १८९–१९०.

(2) 'परं ज्ञानम्' इति व्यवहितेन संबन्धः। भूयः पुनः पूर्वेषु सर्वेष्वध्यायेषु असकृदुक्तमपि प्रवक्ष्यामि। तच्च परम्, परवस्तुविषयत्वात्। किं तत् ज्ञानं सर्वेषां ज्ञानानाम्, उत्तमम्, उत्तमफलत्वात् ॥ भा. १४–१, पा॰ २१८.

इति च। इदमेव च ज्ञानं बुद्धिशब्देन व्यपदिष्टं तृतीयाध्याये –

(३) ज्यायसी चेत् कर्मणस्ते मता बुद्धिर्जनार्दन।
तत्किं कर्मणि घोरे मां नियोजयसि केशव ॥ ३–१.

इत्यत्र ॥

## ज्ञानसाधनान्यपि ज्ञानशब्दवाच्यानि –

३५. ज्ञानशब्दः प्राधान्येन सम्यग्ज्ञानार्थक इत्युक्तम्।

ज्ञानार्थम् अनुष्ठीयमानानि अमानित्वादिसाधनान्यपि गौण्या वृत्त्या ज्ञानशब्दार्हाणि भवन्ति । यदाह भगवान् —

(१) अमानित्वमदम्भित्वमहिंसा क्षान्तिरार्जवम् ।
आचार्योपासनं शौचं स्थैर्यमात्मविनिग्रहः ॥ १३–७

इत्यारभ्य —

अध्यात्मज्ञाननित्यत्वं तत्त्वज्ञानार्थदर्शनम् ।
एतज्ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा ॥ १३–११

इत्येतदन्तेन । तदेतद् व्याख्यास्यन् भाष्यकृदप्याह —

(1) अध्यात्मज्ञाननित्यत्वम् । आत्मादिविषयं ज्ञानम् अध्यात्मज्ञानम्; तस्मिन् नित्यभावो नित्यत्वम् । अमानित्वादीनां ज्ञानसाधनानां भावनापरिपाकनिमित्तं तत्त्वज्ञानम्; तस्यार्थो मोक्षः संसारोपरमः; तस्य आलोचनं तत्त्वज्ञानार्थदर्शनम् । तत्त्वज्ञानफलालोचने हि तत्साधनानुष्ठाने प्रवृत्तिः स्यादिति । एतत् अमानित्वादि तत्त्वज्ञानार्थदर्शनान्तमुक्तम् 'ज्ञानम्' इति प्रोक्तम्; ज्ञानार्थत्वात् । अज्ञानं यत् अतः अस्माद् यथोक्तात् अन्यथा विपर्ययेण । 'मानित्वम्', 'दम्भित्वम्', 'हिंसा', 'अक्षान्तिः', 'अनार्जवम्'–इत्यादि अज्ञानं विज्ञेयं परिहरणाय; संसारप्रवृत्तिकारणत्वात् इति ॥ भा. १३–११, पा. २०१.

## ज्ञानाज्ञानयोः सतत्त्वम् —

२६. यथोक्तेन ज्ञानाज्ञानस्वरूपवर्णनेन इदं गम्यते यत् अमानित्वादीनां भावनापरिपाकात् या अवगतिर्जायते सैव ज्ञानशब्दार्थत्वेन ग्राह्या, न केवला अन्तःकरणवृत्तिः । अत एव हीन्द्रियजन्यज्ञानाद् वैलक्षण्यद्योतनार्थं क्वचिदिदं ज्ञानं 'ज्ञानचक्षुः' (१३–३४) इति निर्दिश्यत इति । यथैव चेह अमानित्वादिसाधनगणोऽनुष्ठेयत्वे-

नोपदिश्यते । एवमेव मानित्वादि परिहर्तव्यत्वेनोपदिश्यते अज्ञानशब्द-वाच्यम् 'अज्ञानं यदतोऽन्यथा' इति । तद्धि ज्ञानं प्रतिबद्ध्य संसारप्रवृत्तौ कारणं भवतीति । एवं च संसारकारणमज्ञानं न ज्ञानाभावमात्रम्, किं तु मिथ्याज्ञानकार्यत्वान्मिथ्याज्ञानशब्दार्हमेव तदिति ज्ञेयम् । अधिकं तु **ज्ञानयोगविवेके** (९२तम खण्डे) ॥

## ज्ञानशब्दस्य द्वावर्थौ –

३७. सम्यग्ज्ञानं नाम न केवलं शास्त्रार्थज्ञानम्, किं तर्हि, एतदेवानुभवपर्यन्तम् इत्यभिप्रायाविष्करणाय विज्ञानशब्दोऽपि तत्र तत्र प्रयुज्यतेऽत्र शास्त्रे । यद्यत्र मोक्षः फलत्वेनोपन्यस्यते, तत्र केवलोऽपि ज्ञानशब्दोऽनुभवपर्यन्तज्ञानार्थक एव विज्ञानपर्यायः – इति ग्राह्यम् । यत्र तु ज्ञानविज्ञानशब्दौ सह प्रयुज्येते (७–२, ९–१) तत्र ज्ञानशब्दः शास्त्रोपदेशजनितपरोक्षज्ञानमात्रविषयः । विज्ञानशब्दस्तु अनुभवपर्यन्त-ज्ञानविषयः – इति विवेक्तव्यम् । तथैव भाष्यकृता व्याख्यातत्वात् ॥

## उपास्यज्ञानमपि क्वचिज्ज्ञानशब्देन निर्दिष्टम् –

३८. न केवलं मोक्षार्थमात्मज्ञानम्, किं तूपास्यस्वरूप-विषयकमपि ज्ञानशब्देन निर्दिष्टं दृश्यतेऽत्र शास्त्रे –

(१) भक्त्या त्वनन्यया शक्य अहमेवं विधोऽर्जुन ।
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परंतप ॥ ११–५४.

अत्र भाष्यम् –

(२) भक्त्या शक्यः अहम् एवंविधः विश्वरूपप्रकारः (हे अर्जुन) ज्ञातुं शास्त्रतः, न केवलं ज्ञातुं शास्त्रतः, द्रष्टुं च साक्षात्कर्तुं तत्त्वेन तत्त्वतः ; प्रवेष्टुं च मोक्षं च गन्तुं परन्तप ॥ पा. १७९.

इति । अत्र साक्षात्कारो नाम उपास्यतादात्म्यभावदार्ढ्यम् । प्रवेशस्तु तादात्म्यापत्तिरेव । विश्वरूपस्य उपासनार्थमेव भगवता दर्शितत्वात् ज्ञातुम् इति परामृष्टं न यथावस्थितवस्तुतन्त्रं ज्ञानम्, किं तु उपास्यत्वेन शास्त्रसमर्पितविश्वरूपविषयकं ज्ञानमिति निश्चीयते ॥

## ज्ञानशब्दस्य वृत्तिविशेषवाचकत्वम् –

२९. अन्तःकरणवृत्तिरपि ज्ञानशब्देनोक्ता क्वचिदपि प्रकरणान्निश्चेतुं शक्यते । तद्यथा –

(१) तत्र सत्त्वं निर्मलत्वात् प्रकाशकमनामयम् ।
सुखसङ्गेन बध्नाति ज्ञानसङ्गेन चानघ ॥ १४–६.

अत्र ज्ञानसङ्गेन 'बध्नाति' इत्युक्तेर्वृत्तिरूपं ज्ञानमिदं विवक्षितम्, नात्मानात्मविवेकलक्षणम्, नापि क्षेत्रज्ञस्य स्वरूपभूतम्, उपास्यविषयकं वेति विज्ञायते । तथा चाह भाष्यकारः –

(1) 'ज्ञानम्' इति सुखसाहचर्यात् क्षेत्रस्यैव विषयस्य अन्तःकरणस्य धर्मः, नात्मनः । आत्मधर्मत्वे सङ्गानुपपत्तेः, बन्धानुपपत्तेश्च ॥ भा. १४–६, पा. २२०.

ज्ञानशब्दो वृत्तेर्वाचकः, अवगतेस्तु लक्षकः । अत्र हेतुस्तु अग्रे स्फुटीभविष्यति ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यवरेण्यश्रीपूज्यपादश्रीमच्छङ्करभगवच्चरणस्मरण-
परिचयावाप्तवेदान्तप्रवेशेन श्रीबोधानन्देन्द्रसरस्वतीशिष्येण
सच्चिदानन्देन्द्रसरस्वत्याख्येन भिक्षुणा प्रणीते
गीताशास्त्रार्थविवेके ज्ञानपदार्थविवेको नाम नवमोऽध्यायः

---

# १०. प्रमाणविवेकः

## शास्त्रस्याप्तवाक्यविधया प्रामाण्यमित्यापाततः –

४०. अथ किं प्रमाणमाश्रित्य प्रवृत्तमिदं शास्त्रम् ? – इत्येतद् विविच्यते । तत्रानुल्लिख्यैव किञ्चित् प्रमाणम् –

(१) अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे ।
गतासूनगतासूंश्च नानुशोचन्ति पण्डिताः ॥ २-११

इति प्रक्रमात्, अर्जुनस्य

(२) कार्पण्यदोषोपहतस्वभावः
पृच्छामि त्वां धर्मसंमूढचेताः ।
यच्छ्रेयः स्यान्निश्चितं ब्रूहि तन्मे
शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम् ॥ २-७

इति प्रश्नम्, भगवतश्च –

(३) स एवायं मया तेऽद्य योगः प्रोक्तः पुरातनः ।
भक्तोऽसि मे सखा चेति रहस्यं ह्येतदुत्तमम् ॥ ४-३

इति च प्रतिवचनशैलीं च पश्यताम् आप्तोपदेशविधयैवात्र शास्त्रं प्रमाणं ग्रहीतव्यमिति प्रतीयते ॥

## वेदमूलकत्वं तु कण्ठोक्तम् –

४१. भगवांस्तु परं कर्तव्यस्यानुष्ठानस्य ज्ञातव्यस्य च परतत्त्वस्य वेदप्रमाणकत्वमेव कण्ठरवेणोक्तवान् –

(१) तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ ।
ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि ॥ १६-२४.

(२) ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम् ।
छन्दांसि यस्य पर्णानि यस्तं वेद स वेदवित् ॥ १५-१.

(३) वेदैश्च सर्वैरहमेव वेद्यो
वेदान्तकृद्वेदविदेव चाहम् ॥ १५-१५

इत्यादिस्थलेषु ॥

(४) ऋषिभिर्बहुधा गीतं छन्दोभिर्विविधैः पृथक् ।
ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैः ॥ १३-४.

इति ॥

## साङ्ख्यादिदर्शनोपदेशाः सारग्रहणदृष्ट्यैव –

४२. यद्यपि साङ्ख्ययोगदर्शनयोरप्युपदेशाः केचित् अत्र दरीदृश्यन्ते गुणत्रयविभागादयः । तथापि तत् सारग्रहणदृष्ट्यैव न तु ते एव दर्शने प्रमाणीकृत्य । तद्विरुद्धवेदप्रक्रियाया इह सुस्पष्टमादरणात् इत्युदर्के प्रदर्शयिष्यते । न्यायवैशेषिकयोस्तु नैव परामर्शोऽत्र । तत्कस्य हेतोः ? वैशेषिकनिरूपितपदार्थानामनात्मत्वेन साङ्ख्योपात्तप्रकृतितत्त्वविचारेणैव विचारितत्वात् । न्यायदर्शनाभ्युपगतप्रमाणानामिह प्रमाणातीते आत्मनि निरर्थकत्वाच्च । अप्रमेयत्वं ह्यात्मन उपदिष्टमस्मिन् शास्त्रे –

(१) अन्तवन्त इमे देहा नित्यस्योक्ताः शरीरिणः ।
अनाशिनोऽप्रमेयस्य तस्माद् युध्यस्व भारत ॥ २-१८

इति । देहादीनां प्रमेयाणामन्तवत्त्वं विवेकिभिरुक्तम् । आत्मा तु 'अप्रमेयः' इति न तस्य विनाश उपपद्यत इत्यर्थः । प्रत्यक्षादिप्रमाणानां प्रमेयपरिच्छेदकत्वं दृष्टं लोके ; आत्मा तु प्रमाणानां

प्रयोक्तुः स्वरूपमिति प्रमाणात् प्रागेव सिद्ध इति न प्रमेय इति भावः । तथा च भाष्यम् –

(३) सिद्धे हि आत्मनि प्रमातरि प्रमित्सोः प्रमाणान्वेषणा भवति । न हि पूर्वम् इत्थमहम् इत्यात्मानं प्रमाय पश्चात् प्रमेयपरिच्छेदाय प्रवर्तते । न हि आत्मा नाम कस्यचिद् अप्रसिद्धो भवति ॥
भा. २-१८, पा. १६.

इति ॥

## गीताशास्त्रस्य स्मृतिप्रस्थानत्वम् –

४३. तदेवं गीताशास्त्रोदितस्यात्मनोऽप्रमेयत्वेन प्रमाणान्तरागोचरत्वात्, आप्तवाक्यस्य च लोके प्रमाणान्तरयोग्यविषयकत्वेनैव प्रमाणत्वदर्शनात् साङ्ख्याद्युक्तप्रक्रियापरामर्शस्य वेदाविरुद्धतदुपबृंहकयुक्तिसमर्पणांशमात्रत्वेन स्वीकार इत्यपि सूपपादत्वात्, साक्षाच्च शास्त्रे चास्मिन् वेदवेदान्तवेद्यकर्मादिसाधनानां परतत्त्वस्य च सबहुमानं प्रतिपादनात् स्मृतित्वेनैवास्य प्रामाण्यं स्वीकर्तव्यम् इति सिद्धम् । तथा हि वेदान्तमीमांसाशास्त्रे सूत्रकारभाष्यकारयोरुभयोरपि स्पष्टं स्मृतित्वेनैवास्य शास्त्रस्य व्यपदेशो दरीदृश्यते । तद्यथा–सूत्रे तावत् –

(१) योगिनः प्रति च स्मर्यते स्मार्ते चैते ॥ वे. सू. ४-२-२१.

इति । भाष्ये खल्वपि

(२) योगिनः प्रति चायम् अहरादिकालविनियोगोऽनावृत्तये स्मर्यते । स्मार्ते चैते योगसाङ्ख्ये न श्रौते । अतो विषयभेदात्, प्रमाणविशेषाच्च नास्य स्मार्तस्य कालविनियोगस्य श्रौतेषु विज्ञानेष्ववतारः । ननु 'अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम्' (८-२४), 'धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम्' (८-२५) इति च श्रौतावेतौ देवयान-

पितृयाणौ प्रत्यभिज्ञायेते स्मृतावपीति । उच्यते – 'तं कालं वक्ष्यामि' इति स्मृतौ कालप्रतिज्ञानात् विरोधमाशङ्क्य परिहार उक्तः । यदा पुनः स्मृतावपि अग्न्याद्या देवता एवाऽऽतिवाहिक्यो गृह्यन्ते तदा न कश्चिद् विरोध इति ॥ सू. भा. पा. ४८९.

एवमन्यत्रापि गीतानां स्मृतित्वेन व्यपदेशो दृश्यते भाष्ये इति यथोक्तेभ्यो हेतुभ्यः स्मृतित्वेनैव प्रामाण्यस्वीकारो न्याय्योऽस्य शास्त्रस्य । अत एवात्र भाष्ये तत्र तत्र श्रुत्यविरोधप्रदर्शनार्थं संवादिश्रुतिवचनान्यपि समुदाह्रियन्ते शास्त्रस्यास्य स्मृतिप्रस्थानत्वप्रतितिष्ठापयिषयेति बोध्यम् । अत एवाहुरिदानींतना अपि

"सर्वोपनिषदो गावो दोग्धा गोपालनन्दनः ।
पार्थो वत्सः सुधीर्भोक्ता दुग्धं गीतामृतं महत् ॥"

इति । एतस्मादेव कारणादस्माभिरप्यत्र टिप्पणरूपेण श्रुतिवचनानि तत्र तत्र निवेश्यन्ते 'गीताशास्त्रमिदं समस्तवेदार्थसारसंग्रहभूतम्' इति भाष्यकारप्रतिज्ञावाक्ये जिज्ञासूनां श्रद्धादार्ढ्याधानायेति सर्वं सुस्थम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यवरेण्यश्रीपूज्यपादश्रीमच्छङ्करभगवच्चरणस्मरण-
परिचयावाप्तवेदान्तप्रवेशेन श्रीबोधानन्देन्द्रसरस्वतीशिष्येण
सच्चिदानन्देन्द्रसरस्वत्याख्येन भिक्षुणा प्रणीते
गीताशास्त्रार्थविवेके प्रमाणविवेको नाम दशमोऽध्यायः

---

# ११. अथ गुणपदार्थविवेकः

**प्रकृतग्रन्थसंबन्धः –**

४४. उक्तमेतत् साङ्ख्यादिदर्शनान्तरादप्यत्र सारग्रहणदृष्ट्या वेदाविरुद्धं शास्त्रार्थप्रतिपादनोपबृंहणसमर्थं चांशं गृहीत्वैवोपदेश-प्रवृत्तिरिति। तत्र साङ्ख्यसंमतो गुणविवेकः प्राधान्येनाद्रियते अत्र सर्वत्र कर्मयोगादिसतत्त्वनिरूपणे। तत्र हेतुरुक्त एव (खं. ??) सांख्यपदार्थविवेकप्रसङ्गेन। अथेदानीं शास्त्रोपदेशविवेकनिर्धारणार्थं सर्वप्रथमं यथाशास्त्रं गुणपदार्थप्रविवेकं करिष्यामः॥

**गुणपदार्थविवेचनावश्यकता –**

४५. तत्र सांख्या मन्यन्ते गुणत्रयात्मिका प्रकृतिः कर्त्री, पुरुषस्तु तदविवेकाद् भोक्ता सन् बद्ध्यते गुणत्रयकार्यविवेकाच्च मुच्यते इति। तदिहापि अनुमन्यते। वक्ष्यते हि भगवता त्रयोदशाध्याये –

(१) पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान् गुणान्।
कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु॥ १३-२१.

इति। तत्र के ते प्रकृतेर्गुणाः, गुणसङ्गात् कथं बन्धः, तेभ्यश्च मोक्षणं केनोपायेन स्यात्—इत्येतन्निरूपणाय कृत्स्नमिदं शास्त्रं प्रवृत्तमिति प्रथमं गुणनिरूपणं कर्तव्यम्। तदर्थं गुणपदार्थविवेकश्च कर्तव्यो भवति॥

**सत्त्वादिषु गुणत्वं पारिभाषिकम् –**

४६. तत्र सत्त्वादिनामानो गुणाः, तेषां सामान्यं प्रकृतिः;

प्रधानापरपर्याया इति सांख्याः। अस्मिंस्तु शास्त्रे सा प्रकृतिर्मायाशब्दवाच्या भगवत्परतन्त्रा–इत्येतावांस्तु विशेषः ॥

(१) सत्त्वं रजस्तम इति गुणाः प्रकृतिसंभवाः ।
निबध्नन्ति महाबाहो देहे देहिनमव्ययम् ॥ १४–५.

(२) दैवी ह्येषा गुणमयी मम माया दुरत्यया ॥ ७–१४.

भाष्यम् –

(1) सत्त्वं, रजः, तमः – इत्येवंनामानो 'गुणाः' इति पारिभाषिकः शब्दः न रूपादिवत् द्रव्याश्रिताः गुणाः। न च गुणिगुणिनोरन्यत्वमत्र विवक्षितम्। तस्मात् गुणा इव नित्यपरतन्त्राः क्षेत्रज्ञं प्रति अविद्यात्मकत्वात् क्षेत्रज्ञं निबध्नन्तीव। तमास्पदीकृत्यात्मानं प्रतिलभन्ते इति निबध्नन्तीत्युच्यते । ते च प्रकृतिसंभवाः भगवन्मायासंभवाः निबध्नन्तीव हे महाबाहो देहे शरीरे देहिनं देहवन्तं अव्ययम् ॥ १४–५, पा. २१९.

अत्र गुणानाम् अविद्याकल्पितत्वं 'माया'शब्दवाच्यत्वादेव प्रकृतेः। अत एव तेषां ज्ञानबाध्यत्वम्, ततः प्राक् बन्धकत्वमिव चेति सूचितम् ॥

## सुखदुःखमोहा अपि गुणशब्दार्हाः –

४७. गुणशब्दो यथैव सत्त्वादिषु, एवं ततो जातेषु सुखदुःखादिष्वपि वर्तते इत्येतत् सांख्याभ्युपगमेन सममत्रापि, तथा हि –

(१) प्रीत्यप्रीतिविषादात्मकाः प्रकाशप्रवृत्तिनियमार्थाः ॥ सां॰का॰ १२

इति सांख्याः। एतदानुगुण्येन भगवानप्याह – 'भुङ्क्ते प्रकृतिजान् गुणान्' इति। भाष्यकारश्च व्याचष्टे –

(1) प्रकृतौ अविद्यालक्षणायां कार्यकरणरूपेण परिणतायां स्थितः, प्रकृतिस्थः । प्रकृतिम् आत्मत्वेन गतः – इत्येतत् । हि यस्मात्, तस्मात् भुङ्क्ते उपलभत इत्यर्थः । प्रकृतिजान् प्रकृतितो जातान् सुखदुःख-मोहाकाराभिव्यक्तान् गुणान् 'सुखी', 'दुःखी', 'मूढः', 'पण्डितोऽहम्' इत्येवम् ॥ भा॰ पा॰ २०९.

अत्र न केवलं कार्यकरणलक्षणविकारः, किं तु सुखदुःखमोहा अपि प्रकृतिगुणकार्याः गुणशब्दवाच्या इत्युक्तम् । उक्तं हि पूर्वमेव विस्पष्टम्–

(२) विकारांश्च गुणांश्चैव विद्धि प्रकृतिसंभवान् ॥ १३–१९

इति । भाष्यं च –

(2) विकारांश्च गुणांश्चैव । वक्ष्यमाणान् विकारान् बुद्ध्यादि-देहेन्द्रियान्तान्, गुणांश्च सुखदुःखमोहप्रत्ययाकारपरिणतान् विद्धि जानीहि ॥ भा॰ पा॰ २०७.

इति ॥

इन्द्रियाणीव विषया अपि गुणशब्दशब्दिताः –

४८. विकारजातं सर्वमपि गुणत्रयकार्यमेवेति यथैव सांख्यैरेव-मेवेहाप्यङ्गीक्रियते । आह हि भगवान् –

(१) न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः ।
सत्त्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात् त्रिभिर्गुणैः ॥ १८–४०.

[ 'सत्त्वं प्राणिजातम् अन्यद्वा ' इति भाष्यम् ॥ ]

अतः, यथैवेन्द्रियाणि तथैव विषया अपि गुणविकारा एवेति तेऽपि गुणशब्दवाच्या एव भवन्ति । यदाह भगवान् –

(२). तत्त्ववित्तु महाबाहो गुणकर्मविभागयोः ।
गुणा गुणेषु वर्तन्त इति मत्वा न सज्जते ॥ ३–२८.

भाष्यम् – गुणाः करणात्मकाः, गुणेषु विषयात्मकेषु ॥

## गुणानां कार्यादि –

४९. तत्र गुणानाम्, किं कार्यम्, कथं तेषामुद्भूतत्वमनुमेयम्, किं च तेषां मरणकाले प्रवृद्धानां च प्रेत्य फलम्? – इत्याह भगवान् विस्तरशश्चतुर्दशे अध्याये। तत्रायं संग्रहः –

(१) सत्त्वं सुखे सञ्जयति रजः कर्मणि भारत।
ज्ञानमावृत्य तु तमः प्रमादे सञ्जयत्युत ॥ १४-९.
सत्त्वात् सञ्जायते ज्ञानं रजसो लोभ एव च।
प्रमादमोहौ तमसो भवतोऽज्ञानमेव च ॥ १४-१७.

(२) सर्वद्वारेषु देहेऽस्मिन् प्रकाश उपजायते।
ज्ञानं यदा तदा विद्यात् विवृद्धं सत्त्वमित्युत ॥ १४-११.
लोभः प्रवृत्तिरारम्भः कर्मणामशमः स्पृहा।
रजस्येतानि जायन्ते विवृद्धे भरतर्षभ ॥ १४-१२.
अप्रकाशोऽप्रवृत्तिश्च प्रमादो मोह एव च।
तमस्येतानि जायन्ते विवृद्धे कुरुनन्दन ॥ १४-१३.

(३) यदा सत्त्वे प्रवृद्धे तु प्रलयं याति देहभृत्।
तदोत्तमविदां लोकानमलान् प्रतिपद्यते ॥
रजसि प्रलयं गत्वा कर्मसङ्गिषु जायते।
तथा प्रलीनस्तमसि मूढयोनिषु जायते ॥ १४-१४, १५.

## गुणानां स्वोत्कर्षेणैव स्वकार्यजनकत्वम् –

५०. यत्सांख्याः प्राहुः –

(1) प्रीत्यप्रीतिविषादात्मकाः प्रकाशप्रवृत्तिनियमार्थाः।
अन्योन्याभिभवाश्रयजननमिथुनवृत्तयश्च गुणाः ॥ सां॰का॰ १२

इति तत्र अन्योन्याभिभवत्वमुक्तं भगवतापि –

(१) रजस्तमश्चाभिभूय सत्त्वं भवति भारत ।
रजः सत्त्वं तमश्चैव तमः सत्त्वं रजस्तथा ॥ १४-१०.

सत्त्वादिगुणा सुखादिषु सञ्जनरूपं कार्यम् अन्योन्याभिभवेनैव कुर्वन्ति । तस्माद् यः सत्त्वगुणवृद्धिमिच्छति, तदर्थं यतते च तेन रजस्तमसी जिते भवत इति सिद्धम् । अत एव तत्त्वज्ञानार्थं यथा सत्त्वोद्भूतिर्भवेद् रजस्तमसोरभिभवश्च, तथा कर्मयोगादिसाधनान्युपदिश्यन्तेऽत्र । एतच्च दर्शयिष्यामः परेण ग्रन्थेन । उपलक्षणं चेदम् अन्योन्याश्रयत्वादीनाम् । उदाहृतं हि –

(२) 'न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः ।'
सत्त्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात् त्रिभिर्गुणैः ॥'

इति । अतः सहैव गुणा भवन्ति ; परस्पराश्रयेणैव स्वकार्यं निर्वहन्ति । अभिभूते अपि रजस्तमसी आश्रित्यैव स्वं कार्यं करोति सत्त्वमिति तद्द्वयाश्रयमित्युच्यते । सात्त्विककर्मादिषु प्रवृत्तिरपि हि रजोगुणसहायमपेक्षते, तच्च रजः कर्मारम्भे प्रवर्तयत् पूर्वं निद्राविश्रान्त्यादि समाश्रयणेनैव स्वकार्यकरणे समर्थमिति । एवमन्योन्यवृत्तित्वं जनकत्वं चोह्यम् ॥

## गुणत्रयक्षयेन मोक्षः –

५१. गुणपुरुषविवेकतत्त्वालोचनाभ्यासादेव केवलात् पुरुषस्य स्वास्थ्यं लभ्यमिति सांख्या मन्यन्ते । अत्र तु शास्त्रे गुणत्रयस्य मायिकत्वज्ञानादेव पुरुषस्य अमृतप्राप्त्याख्या पारमार्थिके स्वात्मनि स्थितिरित्युपदिश्यत इति विशेषः । एतच्चोत्तरत्र स्फुटयिष्यते ॥

(१) गुणानेतानतीत्य त्रीन् देही देहसमुद्भवान् ।
जन्ममृत्युजरादुःखैर्विमुक्तोऽमृतमश्नुते ॥ १४–२०.

भाष्यम् – गुणानेतान् यथोक्तान् अतीत्य जीवन्नेवातिक्रम्य मायोपाधिभूतान् त्रीन् देही देहसमुद्भवान् देहोत्पत्तिबीजभूतान् जन्ममृत्युजरादुःखैः जन्म च मृत्युश्च जरा च दुःखानि च जन्ममृत्युजरादुःखानि तैः जीवन्नेव विमुक्तः सन् विद्वान् अमृतमश्नुते । एवं मद्भावम् अधिगच्छति ॥ भा. १४–२०, पा. २२४.

इति श्रीमत्परमहंसपरिव्राजकाचार्यवरेण्यश्रीपूज्यपादश्रीमच्छङ्करभगवच्चरणस्मरण-
परिचयावाप्तवेदान्तप्रवेशेन श्रीबोधानन्देन्द्रसरस्वतीशिष्येण
सच्चिदानन्देन्द्रसरस्वत्याख्येन भिक्षुणा प्रणीते
गीताशास्त्रार्थविवेके गुणपदार्थविवेको नाम एकादशोऽध्यायः

---

# १२. कर्मयोगविवेकः

## बन्धमोक्षहेतू –

५२. वृत्तः पदार्थविवेकविभागः । अथ शास्त्रोपदेशविवेकः प्रारभ्यते । तत्रायमुत्सर्गः, यत् प्रकृतिपुरुषविवेकाभावाद् सञ्जात-तत्संयोगेन गुणत्रयकारितः सर्वो जन्तुर्विविधयोनिषु जायते । गुण-कर्मसु सक्तः कर्माणि करोति, तत्फलं च भुङ्क्ते । शास्त्रजन्यज्ञानेन तु गुणानतीतो विमुच्यते, अमृतत्वं च गच्छतीति । तदुक्तम् –

(१) यावत् संजायते किञ्चित् सत्त्वं स्थावरजङ्गमम् ।
क्षेत्रक्षेत्रज्ञसंयोगात् तद् विद्धि भरतर्षभ ॥ १३-२६.

(२) सत्त्वं रजस्तम इति गुणाः प्रकृतिसंभवाः ।
निबध्नन्ति महाबाहो देहे देहिनमव्ययम् ॥ १४-५.

(३) पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान् गुणान् ।
कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु ॥ १३-२१.

भाष्यम् – एतदुक्तं भवति । प्रकृतिस्थत्वाख्या ह्यविद्या गुणेषु च सङ्गः कामः, संसारस्य कारणमिति । अस्य च निवृत्तिकारणं ज्ञानवैराग्ये ससंन्यासे गीताशास्त्रे प्रसिद्धम् ॥ भा. २०९.

[ एतस्य विस्तरः परेण ध्यानयोगादिविवेकेषु भविता ॥ ]

## राजसतामसबुद्ध्योर्धर्मतत्त्वनिर्धारणे शक्त्यभावः –

५३. अथैवं सति राजसी तामसी च बुद्धिर्धर्मतत्त्वं निर्धार-यितुं न प्रभवति ॥

(१) यया धर्ममधर्मं च कार्यं चाकार्यमेव च ।
अयथावत् प्रजानाति बुद्धिः सा पार्थ राजसी ॥ १८-३१.

अधर्मं धर्ममिति या मन्यते तमसाऽऽवृता ।
सर्वार्थान् विपरीतांश्च बुद्धिः सा पार्थ तामसी ॥ १८-३२.

अत एव पापात्मानो राजसीं तामसीं च बुद्धिं समाश्रिताः आसुरीं संपदमभिजाताः स्वेच्छाचारे प्रवर्तन्ते । तच्च षोडशाध्याये प्रदर्शितं विस्तरशः । दिङ्मात्रमिह कतिभिश्चिच्छ्लोकैर्दर्शयिष्यामः ॥

(२) प्रवृत्तिं निवृत्तिं च जना न विदुरासुराः ।
न शौचं नापि चाचारो न सत्यं तेषु विद्यते ॥ १६-७.
एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः ।
प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽहिताः ॥ १६-९.
काममाश्रित्य दुष्पूरं दम्भमानमदान्विताः ।
मोहाद् गृहीत्वाऽसद्ग्राहान् प्रवर्तन्तेऽशुचिव्रताः ॥ १६-१०.
अनेकचित्तविभ्रान्ता मोहजालसमावृताः ।
प्रसक्ताः कामभोगेषु पतन्ति नरकेऽशुचौ ॥ १६-१६.

आसुराणां शास्त्रीयकर्माश्रयणमपि न पुरुषार्थाय –

५४. अज्ञानाम् आसुराणाम् स्वेच्छाचारात् पुरुषार्थानवाप्तिर्दुर्गतिप्राप्तिश्चेति[1] स्पष्टमेव –

(१) यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः ।
न स सिद्धिमवाप्नोति न सुखं न परां गतिम् ॥ १६-२३.

इति भगवदुक्तेः ।

'......................... मोहजालसमावृताः ।
प्रसक्ताः कामभोगेषु पतन्ति नरकेऽशुचौ ' ॥ १६-१६.

इति च ॥

1. 'नाविरतो दुश्चरितात्' का. १-२-२४.

शास्त्रीयकर्मसु प्रवृत्तानामपि तेषां दम्भादिप्रयुक्तैव प्रवृत्तिः । अतो न तावता पुरुषार्थयोग्यता भवेत् तेषाम् । यत्कारणं तेषां भगवति न केवलं न भक्तिः, यावद् द्वेषोऽपि भवति । ततश्चाधोगतिर्निश्चिता तेषाम् ॥

(१) यक्ष्ये दास्यामि मोदिष्य इत्यज्ञानविमोहिताः ॥ १६-१५.
आत्मसंभाविताः स्तब्धा धनमानमदान्विताः ।
यजन्ते नामयज्ञैस्ते दम्भेनाविधिपूर्वकम् ॥ १६-१७.

(२) न मां दुष्कृतिनो मूढाः प्रपद्यन्ते नराधमाः ।
माययापहृतज्ञाना आसुरं भावमाश्रिताः ॥ ७-१५.

(३) अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम् ।
परं भावमजानन्तो मम भूतमहेश्वरम् ॥
मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः ।
राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिताः ॥ ९-११, १२.

(४) अहङ्कारं बलं दर्पं कामं क्रोधं च संश्रिताः ।
मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः ॥ १६-१८.

(५) तानहं द्विषतः क्रूरान् संसारेषु नराधमान् ।
क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ॥
आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि ।
मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम् ॥ १६-१९, २०.

[ 'आसुरीष्वेव योनिषु क्षिपामि' इत्युक्तैर्वैषम्यनैर्घृण्ये भगवति नाशङ्कितव्ये ; धर्माधर्मसापेक्षस्यैव भगवतः फलहेतुत्वात् । विमर्शव्यं त्विदं स्वप्रकरणे इतीह न वितन्यते ॥]

## शास्त्रोल्लङ्घने हेतुः –

५५. स्वेच्छाचारे प्रवृत्तिस्तु कामप्रयुक्ता, इन्द्रियार्थेषु रागद्वेषपरवशताकृता च । शास्त्रदृष्टीनां तु तत्त्यागः सुकरः –

अर्जुन उवाच –

(१) अथ केन प्रयुक्तोऽयं पापं चरति पूरुषः ।
अनिच्छन्नपि वार्ष्णेय बलादिव नियोजितः ॥

श्री भगवानुवाच –

काम एष क्रोध एष रजोगुणसमुद्भवः ।
महाशनो महापाप्मा विद्ध्येनमिह वैरिणम् ॥ ३–३६, ३७.

भाष्यम् – काम एषः सर्वलोकशत्रुः, यन्निमित्ता सर्वानर्थप्राप्तिः । स एष कामः प्रतिहतः केनचित् क्रोधत्वेन परिणमते । अतः क्रोधोऽप्येष एव[1]। रजोगुणसमुद्भवः । रजश्च तत् गुणश्च रजोगुणः, स समुद्भवो यस्य स कामो रजोगुणसमुद्भवः । रजोगुणस्य वा समुद्भवः । कामो हि समुद्भूतो रजः प्रवर्तयन् पुरुषं प्रवर्तयति ॥ भा. पा. ५८.

(२) इन्द्रियस्येन्द्रियस्यार्थे रागद्वेषौ व्यवस्थितौ ।
तयोर्न वशमागच्छेत् तौ ह्यस्य परिपन्थिनौ ॥ ३–३४.

भाष्यम् – शास्त्रार्थे प्रवृत्तः पूर्वमेव रागद्वेषयोर्वशं नाऽऽगच्छेत् । या हि पुरुषस्य प्रकृतिः, सा रागद्वेषपुरःसरैव स्वकार्ये पुरुषं प्रवर्तयति । तदा स्वधर्मपरित्यागः, परधर्मानुष्ठानं च भवति । यदा पुनः, रागद्वेषौ तत्प्रतिपक्षेण नियमयति, तदा शास्त्रदृष्टिरेव पुरुषो भवति न प्रकृतिवशः ॥ भा. पा. ५७.

(३) यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः ।
न स सिद्धिमवाप्नोति न सुखं न परां गतिम् ॥
तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ ।
ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि ॥ १६–२३, २४.

---

1. कामः करोति नाहं करोमि कामः कर्ता नाहं कर्ता कामः कारयिता नाहं कारयिता । …….. मन्युः करोति नाहं करोमि मन्युः कर्ता नाहं कर्ता मन्युः कारयिता नाहं कारयिता । …… ॥ तै. ना. ६१–६२.

## काम्यकर्मवर्जनं मुमुक्षूणामवश्यम् –

५६. शास्त्रदृष्टिमाश्रितानामपि जनानाम् अविद्याकामदूषितचेतसां सङ्गफलाभिसन्धिपूर्विकैव भवति वाङ्मनःकायप्रवृत्तिः । अतस्ते काम्यकर्मस्वेव प्रवृत्ता भवन्ति प्रायशः । ततश्च तत्तत्कर्मफलभोगानन्तरं शेषकर्मफलभोगार्थं पुनरपि देहान्तरादानं तेषां दुर्निवारणं स्यात् – इत्यतः काम्यकर्मणः शास्त्रीयत्वेऽपि मुमुक्षूणां तद्वर्जनमेव प्रशस्यतेऽत्र तन्निन्दामुखेन[1] –

(१) यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः ।
वेदवादरताः पार्थ नान्यदस्तीति वादिनः ॥
कामात्मानः स्वर्गपरा जन्मकर्मफलप्रदाम् ।
क्रियाविशेषबहुलां भोगैश्वर्यगतिं प्रति ॥
भोगैश्वर्यप्रसक्तानां तयापहृतचेतसाम् ।
व्यवसायात्मिका बुद्धिः समाधौ न विधीयते ॥[2] २–४२,४३,४४

(२) अन्तवत्तु फलं तेषां तद्भवत्यल्पमेधसाम् ॥ ७–२३.
[ तेषां देवतान्तराराधकानाम् ]

(३) धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम् ।
तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते ॥ ८–२५.
[ योगी – कर्मी ]

---

1. प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म ।
एतच्छ्रेयो येऽभिनन्दन्ति मूढा जरामृत्युं ते पुनरेवापि यन्ति ॥
अविद्यायामन्तरे वर्तमानाः स्वयं धीराः पण्डितंमन्यमानाः ।
जङ्घन्यमानाः परियन्ति मूढा अन्धेनैव नीयमाना यथान्धाः ॥
मुं. १–२–७, ८.

2. तस्मिन् यावत् संपातमुषित्वाथैतमेवाध्वानं पुनर्निवर्तन्ते यथेतम् ॥
छां. ५–१०–५.

(४) त्रैविद्या मां सोमपाः पूतपापा यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते ।
ते पुण्यमासाद्य सुरेन्द्रलोकमश्नन्ति दिव्यान् दिवि देवभोगान् ॥९-२०
ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्यलोकं विशन्ति ।[1]
एवं त्रयीधर्ममनुप्रपन्ना गतागतं कामकामा लभन्ते ॥ ९-२१.

अत्र कर्मणां स्वर्गादिफलनिर्देशात् मनुष्यलोकस्थानामेवाधिकारिणाम् काम्यकर्मनिषेधः, इतरलोकेषु कर्मप्रसङ्गाभावादिति न मन्तव्यम् ॥

(५) काङ्क्षन्तः कर्मणां सिद्धिं यजन्त इह देवताः ।
क्षिप्रं हि मानुषे लोके सिद्धिर्भवति कर्मजा ॥ ४-१२.

इति मनुष्यलोके कर्मफलसिद्धेः क्षैप्रयोक्तेः । आह हि भाष्यकृदत्र —

(भ) 'मनुष्यलोके हि शास्त्राधिकारः । 'क्षिप्रं हि मनुष्यलोके' इति विशेषणात् अन्येष्वपि कर्मफलसिद्धिं दर्शयति भगवान् ॥
भा. पा. ६५.

इति । अत्रोक्ता 'कर्मजा सिद्धिः' काम्यकर्मजा इति प्रकरणात् गम्यते । नित्यकर्मणां परमेश्वरार्चनबुद्ध्या कृतानां सिद्धिर्ज्ञाननिष्ठायोग्यतालक्षणा तूत्तरत्र (खं. ७८) वक्ष्यते ॥

## नित्यकर्माण्यपि फलवन्ति —

५७. नित्यमपि कर्म दोषवत्त्वान्मुमुक्षुणा त्याज्यमिति साङ्ख्यादयः । तन्न त्याज्यम्; सङ्गफलाभिसन्धित्यागपूर्वकं कर्तव्यमेवेति भगवतो मतम् —

---

1. इष्टापूर्तं मन्यमाना वरिष्ठं नान्यच्छ्रेयो वेदयन्ते प्रमूढाः ।
नाकस्य पृष्ठे ते सुकृतेऽनुभूत्वेमं लोकं हीनतरं वा विशन्ति ॥
मुं. १-२-१०.

(१) यज्ञदानतपःकर्म न त्याज्यं कार्यमेव तत् ।
यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् ॥ १८-५.
एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानि च ।
कर्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम् ॥ १८-६.

अत्र काम्यकर्माण्येव 'एतानि' इत्यनेन परामृश्यन्त इति केचिद् वृत्तिकाराः । तदेतन्निराचष्टे भाष्यकृत् –

(1) तदसत् । नित्यानामपि कर्मणाम् इह फलवत्त्वस्योपपादितत्वात् 'यज्ञो दानं तपश्चैव पावनानि' (१८-५) इत्यादिवचनेन । नित्यान्यपि कर्माणि बन्धहेतुत्वाशङ्कया जिहासोर्मुमुक्षोः कुतः काम्येषु प्रसङ्गः ? 'दूरेण ह्यवरं कर्म' इति च निन्दितत्वात् । 'यज्ञार्थात् कर्मणोऽन्यत्र' (३-९) इति च काम्यकर्मणां बन्धहेतुत्वस्य निश्चितत्वात् । 'त्रैगुण्यविषया वेदाः', 'त्रैविद्या मां सोमपाः', 'क्षीणे पुण्ये मर्त्यलोकं विशन्ति'-इति च । दूरव्यवहितत्वाच्च न काम्येषु 'एतान्यपि' इति व्यपदेशः ॥ भा. १८-६, पा. २५८, २५९.

## कर्मयोगस्य अंशचतुष्टयवत्प्रकारकत्वम् –

५८. काम्यवर्जनपूर्वकं नित्यकर्मणां विशिष्टप्रकारेणानुष्ठानं कर्मयोगः । तदेतत्सूचयति भाष्यकारः –

(१) एषा तेऽभिहिता साङ्ख्ये बुद्धिर्योगे त्विमां शृणु ।
बुद्ध्या युक्तो यया पार्थ कर्मबन्धं प्रहास्यसि ॥ २-३९.

इति श्लोकव्याख्यानावसरे –

" योगे तु तत्प्राप्त्युपाये निःसङ्गतया द्वन्द्वप्रहाणपूर्वकम् ईश्वराराधनार्थे कर्मयोगे कर्मानुष्ठाने, समाधियोगे च, इमाम् अनन्तरमेव उच्यमानां बुद्धिं शृणु । तां बुद्धिं स्तौति प्ररोचनार्थम् – बुद्ध्या यया योगविषयया युक्तो हे पार्थ कर्मबन्धम् – कर्मैव धर्माधर्माख्यो बन्धः

कर्मबन्धः ; तं-प्रहास्यसि ईश्वरप्रसादनिमित्तज्ञानप्राप्त्यैव-इत्यभिप्रायः॥ भा॰ पा॰ २७.

अत्र हि (1) 'निःसङ्गतया' इति कर्मणि सङ्गस्त्याज्य इति सूचितम् । एतद्वक्ष्यते

(२) योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वा धनञ्जय ॥ २-४८

इति । (2) द्वन्द्वप्रहाणपूर्वकम् इति सुखदुःखहेतुभूतरागद्वेषादिद्वन्द्वजयः सूचितः । एतच्च वक्ष्यते

(३) निर्द्वन्द्वो नित्यसत्त्वस्थो निर्योगक्षेम आत्मवान् ॥ २-४५.

इत्यत्र । (3) 'ईश्वराराधनार्थे' इति समत्वबुद्ध्याश्रयणेन फलाभिसन्धित्यागम् ईश्वराभ्यर्चनं च सूचितम् । एतच्च वक्ष्यते

(४) कर्मजं बुद्धियुक्ता हि फलं त्यक्त्वा मनीषिणः ।
जन्मबन्धविनिर्मुक्ताः परं गच्छन्त्यनामयम् ॥ २-५१.

(५) 'यज्ञार्थात् कर्मणोऽन्यत्र' (३-९), 'मयि सर्वाणि कर्माणि संन्यस्य'(३-३०),'स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः॥'१८-४

इति च । (4) 'समाधियोगे च' इति च कर्मयोगस्य ध्यानयोगोपायत्वं सूचितम् । एतत्तु वक्ष्यते

(६) आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते ।
योगारूढस्य तस्यैव शमः कारणमुच्यते ॥ ६-३

इत्यत्र ॥

एवं चात्र 'योगे त्विमां शृणु' इति परामृष्टा योगबुद्धिः कर्मयोगध्यानयोगभक्तियोगलक्षणयोगत्रयविषया – इति, कर्मयोगे च

कर्मप्राधान्यम् ध्यानभक्त्योरुपसर्जनतया तदवरोधः – इति च भगवतो भाष्यकारस्याभिप्रायो गम्यते ॥

## कर्मयोगे योगान्तरांशस्यान्तर्भावः –

५९. कर्मयोगस्तावदन्तर्णीतयोगान्तरांश इति प्रप्रथमं स एवादरणीयो मुमुक्षुभिरिति भगवानभिप्रैति । तत्र **ध्यानयोगांशान्तर्भावो** यथा –

(१) अनाश्रितः कर्मफलं कार्यं कर्म करोति यः ।
स संन्यासी च योगी च न निरग्निर्नचाक्रियः ॥ ६-१.
यं संन्यासमिति प्राहुर्योगं तं विद्धि पाण्डव ।
न ह्यसंन्यस्तसङ्कल्पो योगी भवति कश्चन ॥ ६-२.

अत्र कर्मफलत्यागात् संन्यासांशान्तर्भावः, संन्यासश्च शमशब्दवाच्यो ध्यानयोगसाधनम् । कर्मयोगे समत्वबुद्धिमाश्रित्य फलविषयसङ्कल्पत्यागेनापि ध्यानयोगांशान्तर्भावनम् इत्युक्तम् । तथा च भाष्यम् –

(1) यो हि परमार्थसंन्यासी स त्यक्तसर्वकर्मसाधनतया सर्वकर्मतत्फलविषयं सङ्कल्पं प्रवृत्तिहेतुकामकारणं संन्यस्यति । अयमपि कर्मयोगी कर्म कुर्वाण एव फलविषयं सङ्कल्पं संन्यस्यति ॥

इति,

(2) तस्मात्, यः कश्चन कर्मी संन्यस्तफलसङ्कल्पो भवेत्, स योगी समाधानवान् अविक्षिप्तचित्तो भवेत् । चित्तविक्षेपहेतोः फलसङ्कल्पस्य संन्यस्तत्वात्–इत्यभिप्रायः ॥ भा. ६-२, पा. १००.

इति च ॥

## भक्तियोगान्तर्भावो यथा –

(२) यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।
यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम् ॥ ९-२७.

शुभाशुभफलैरेवं मोक्ष्यसे कर्मबन्धनैः ।
संन्यासयोगयुक्तात्मा विमुक्तो मामुपैष्यसि ॥ ९-२८.

अत्र सर्वेषां लौकिकानां वैदिकानां च व्यवहाराणां च ईश्वरार्पणबुद्ध्या कुर्वाणस्य कर्मयोगिनः शुभाशुभफलैर्मुक्तिरुपदिष्टा । अतः कर्मप्राधान्यात् कर्मयोगत्वम्, ईश्वरार्पणाच्च भक्तियोगांशवत्त्वमिति स्पष्टम् । यथा च कर्मसंन्यासेन विशुद्धचित्तस्य केवलध्यानयोगानुष्ठानम्, तस्य च ध्यानयोगस्य भक्तियोगे अनुप्रवेशः, तथा उत्तरत्र यथास्थानम् उपपादयिष्याम इत्यास्तां तावदेतत् ॥

**कर्मयोगप्रशंसायां हेतुः –**

६०. कर्मयोगजा या सिद्धिर्ज्ञाननिष्ठायोग्यतालक्षणा तया परम्परया गुणकृतकर्मजन्मबन्धप्रहाणलक्षणा परमसिद्धिरपि भविष्यतीति कृत्वा कर्मयोगं प्रथमं विधाय तत्प्रशंसा क्रियतेऽत्र । शास्त्रीयकर्ममात्रं सङ्गफलाशावर्जितं तन्निष्ठतया भगवत्प्रीत्यर्थं कृतं कर्मयोगस्य सारः । तच्च जन्मबन्धान्मुक्तौ हेतुः ॥

आह हि भगवान् –

(१) कायेन मनसा बुद्ध्या केवलैरिन्द्रियैरपि ।
योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वाऽऽत्मशुद्धये ॥ ५-११.

(२) स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ॥ १८-४६
इति ॥

भाष्यम् – स्वकर्मणा भगवतोऽभ्यर्चनभक्तियोगस्य सिद्धिप्राप्तिः फलम्, ज्ञाननिष्ठायोग्यता । यन्निमित्ता च ज्ञाननिष्ठा, मोक्षफलावसाना स भगवद्भक्तियोगोऽधुना स्तूयते ॥ भा. १८-५६, पा. २८५.

[ भक्तियोगद्वारा कर्मयोगस्य फलं ज्ञाननिष्ठायोग्यतालक्षणसिद्धिप्राप्तिरित्युक्तं भवति ॥ ]

(३) नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते ।
स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात् ॥ २-४०.

[ केवलकर्मणो विगुणत्वादिक्तो विफलत्वमपि स्यात्, विध्यतिक्रमणादिहेतोः प्रत्यवायोऽपि । इह तु वैगुण्यहेतोरभावात् ईश्वरप्रसादसद्भावाच्च न तथेत्यर्थः ॥]

(४) कर्मण्येवाधिकारस्ते मा फलेषु कदाचन ।
मा कर्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्मणि ॥ २-४७.

[ कर्मफलम् – जन्म ]

(५) योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वा धनञ्जय ।
सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते ॥ २-४८.
कर्मजं बुद्धियुक्ता हि फलं त्यक्त्वा मनीषिणः ।
जन्मबन्धविनिर्मुक्ताः पदं गच्छन्त्यनामयम् ॥ २-५१.

[ बुद्धिः – ईश्वरार्पितचेतस्तया समत्वबुद्धिः ॥ ]

यथा च कर्मयोगस्य ध्यानभगवत्प्रसादनिमित्तज्ञानप्राप्तिद्वारेण परम्परया परमपुरुषार्थहेतुत्वम्, तथा आगामिग्रन्थभागे प्रपञ्चयितव्यमितीह विरम्यते ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यवरेण्यश्रीपूज्यपादश्रीमच्छङ्करभगवच्चरणस्मरण-
परिचयावाप्तवेदान्तप्रवेशेन श्रीबोधानन्देन्द्रसरस्वतीशिष्येण
सच्चिदानन्देन्द्रसरस्वत्याख्येन भिक्षुणा प्रणीते
गीताशास्त्रार्थविवेके कर्मयोगविवेको नाम द्वादशोऽध्यायः

---

# १३. कर्मसंन्यासविवेकः

## संन्यासमधिकृत्य चिन्ता किमर्था ? –

६१. श्रौतस्मार्तकर्मसहितात् ज्ञानात् कैवल्यप्राप्तिरिति गीताशास्त्रार्थ इति वृत्तिकारमतं निरस्य सर्वकर्मसंन्यासपूर्वकात् आत्मज्ञाननिष्ठारूपादेव धर्मात् सर्वसंसारोपलक्षणपरमनिःश्रेयसप्राप्तिरिति शास्त्रार्थ इति विविच्य दर्शयितुं भगवत्पादानां भाष्यप्रवृत्तिरित्यवोचाम। एतच्च कर्मतत्संन्यासयोर्विवेकेनैव निर्धारणीयमिति स्पष्टम्। तत्र कर्मयोगोपदेशेन काम्यवर्जं नित्यकर्मानुष्ठानं सङ्गफलाभिसन्धिरहितम् ईश्वराराधनबुद्ध्या कर्तव्यम् इति भगवतो मतमित्यधिगतम्। अथेदानीं कर्मसंन्यासोपदेशः कीदृशो भगवतोपदिष्टः, स च कर्मयोगोपदेशेन कथं सङ्गमनीयः ? – इत्येतद् विचारणीयम्। तत्रादौ संन्यासमेवाधिकृत्य चिन्ता प्रतायते ॥

## त्यागसंन्यासशब्दार्थनिर्णयः –

६२. तत्रार्जुनस्य प्रश्नस्तावत् शास्त्रान्तिमाध्यायप्रारम्भे एवं समुपस्थापितः –

(१) संन्यासस्य महाबाहो तत्त्वमिच्छामि वेदितुम्।
त्यागस्य च हृषीकेश पृथक्केशिनिषूदन ॥ १८–१

अत्र संन्यासविशेषं कञ्चिन्मनसि निधाय अर्जुनेन पृच्छ्यते इति भगवत्कृतात् प्रश्ननिर्णयादवगम्यते। एवं हि तत्र निर्णयवाक्यम् –

(२) काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुः ।
सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणाः ॥ १८-२

इति । नात्र शक्यते वक्तुं काम्यकर्मसंन्यासफलत्यागयोरेव संन्यास-त्यागशब्दवाच्यत्वेन निरणैषीत् भगवानिति । तथा हि भगवतैवोप-न्यस्तं वचनान्तरं व्याहन्येत । कथम् ?

(३) संन्यासः कर्मयोगश्च निःश्रेयसकरावुभौ ।
तयोस्तु कर्मसंन्यासात् कर्मयोगो विशिष्यते ॥ ५-२

इति हि पञ्चमारम्भे । न च तत्र कर्मसंन्यासशब्दः काम्यकर्ममात्र-संन्यासपरः,

संन्यासं कर्मणां कृष्ण पुनर्योगं च शंससि ।
यच्छ्रेय एतयोरेकं तन्मे ब्रूहि सुनिश्चितम् ॥ ५-१

इति ह्यर्जुनेन पृष्टो भगवान् प्रतिवक्ति 'संन्यासः कर्मयोगश्च' इति ।

योगसंन्यस्तकर्माणं ज्ञानसञ्छिन्नसंशयम् ।
आत्मवन्तं न कर्माणि निबध्नन्ति धनञ्जय ॥ ४-४१.

इति सामान्येन कर्ममात्रसंन्यासं प्रशंसितवन्तं हि भगवन्तं पृच्छति स्मार्जुनः, न केवलकाम्यकर्मसंन्यासमधिकृत्य । एकस्यैव पुरुषस्य कर्मसंन्यासस्तद्योगश्च न संभवतीति कृत्वा चायं प्रश्नः – इति 'यच्छ्रेय एतयोरेकं तन्मे ब्रूहि' इति प्रश्नसामर्थ्यादवसीयते ; न च काम्यकर्मसंन्यासः, तदितरकर्मयोगेन विरुध्यते । तस्मात्, ज्ञाननिष्ठा-मप्राप्तानेव मुमुक्षून् अधिकृत्यार्जुनस्य प्रश्नः, 'कीदृशः संन्यासस्तेषां युक्तः ?' इति । तदनुगुणमेव च भगवतः प्रतिवचनं काम्यवर्जं सर्वं कर्म तैरनुष्ठेयम्, फलत्यागपूर्वकम् । स एव च तेषां त्यागः संन्यास-श्चेति प्रश्ननिर्णयवाक्यबलात् अवगम्यते । अत एवाहाचार्यः –

(1) यदि काम्यकर्मपरित्यागः फलपरित्यागो वा अर्थो वक्तव्यः, सर्वथा परित्यागमात्रं संन्यासत्यागशब्दयोरेकोऽर्थः स्यात् न घटपट-शब्दाविव जात्यन्तरभूतार्थौ ॥ भा. पा. २५५.

[अतो मुमुक्षूणां काम्यकर्मसंन्यासः, सर्वकर्मफलत्यागश्च कर्तव्या-वेवेति भगवतो मतमिति गम्यते 'कवयो विदुः', 'विचक्षणाः प्राहुः' - इति च प्रशंसितत्वात्, अनिषेधाच्च ॥]

## यज्ञादित्यागविषये विकल्पः, निर्णयश्च –

६३. वाक्यशेषाच्चैतदेवमिति गम्यते । तत्र हि यज्ञादि-नित्यकर्म त्यक्तव्यं वा, न वा ?– इति वादिविप्रतिपत्तेर्विकल्प्य निर्णयः क्रियते । न चैतत् समञ्जसं स्यात् यदि सर्वकर्मफलत्याग एव त्याग-शब्दार्थ इति निर्णिनीषितं स्यात् ॥

एवं हि तत्र विकल्पः, भगवतो निर्णयश्च –

(१) त्याज्यं दोषवदित्येके कर्म प्राहुर्मनीषिणः ।
यज्ञदानतपःकर्म न त्याज्यमिति चापरे ॥ १८-३.
निश्चयं शृणु मे तत्र त्यागे भरतसत्तम ॥ १८-४.
यज्ञदानतपःकर्म न त्याज्यं कार्यमेव तत् ।[1]
यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् ॥ १८-५.

अत्र भाष्यम् –

(1) त्याज्यं त्यक्तव्यं दोषवत् । दोषोऽस्यास्तीति दोषवत् । किं तत् ? कर्मबन्धहेतुत्वात् सर्वमेव । अथवा दोषो यथा रागादिस्त्यज्यते तथा त्याज्यम् इत्येके कर्म प्राहुर्मनीषिणः पण्डिताः, सांख्यादिदृष्टि-माश्रिताः । अधिकृतानां कर्मिणामपीति । तत्रैव यज्ञदानतपःकर्म न त्याज्यमिति चापरे ॥ भा. पा. २५६.

---

1. कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः ॥ ई. २.

सर्वं कर्म स्वर्गादिफलवदपि दोषवदिति त्याज्यमेवेति सांख्याः, विहितत्वात् न त्याज्यम् इति मीमांसकाः। 'अधिकृतानां कर्मिणामपि' इति भाष्ये अपिशब्दात् किमु मुमुक्षूणाम्—इति भावो गम्यते। भगवांस्तु यज्ञादीनां पावनत्वात् चित्तशुद्धिकरत्वात् तानि न त्याज्यानि मुमुक्षुभिरिति निर्णयं चकार॥

## मुमुक्षोः नित्यकर्मसंन्यासविषये विकल्पाः —

६४. तत्राज्ञस्य मुमुक्षोः कर्मसङ्गफलाभिसन्धित्यागरूप एव संन्यासः प्रशस्तः —

(१) नियतस्य तु संन्यासः कर्मणो नोपपद्यते।
मोहात् तस्य परित्यागस्तामसः परिकीर्तितः॥ १८–७.
दुःखमित्येव यत् कर्म कायक्लेशभयात् त्यजेत्।
स कृत्वा राजसं त्यागं नैव त्यागफलं लभेत्॥ १८–८.
कार्यमित्येव यत्कर्म नियतं क्रियतेऽर्जुन।
सङ्गं त्यक्त्वा फलं चैव स त्यागः सात्त्विको मतः॥ १८–९.

अत्र 'मोहात् त्यागस्तामसः' इति वचनात् विवेकपूर्वकस्त्यागोऽपि कश्चिदस्तीति संभाव्यते। दुःखमिति परित्यक्तवतो न त्यागफललाभः स्यात् — इति वचनाच्च प्रकारान्तरेण त्यागः फलवानित्यपि। फलत्यागस्यैव सात्त्विकत्यागत्वेन स्तुतिश्च परमार्थत्यागस्य संनिपत्योपकारकत्वात्। तदुक्तम्। आचार्येण —

(1) अस्ति हि कर्मसंन्यासस्य फलाभिसन्धित्यागस्य च त्यागत्वसामान्यम्। तत्र राजसतामसत्वेन कर्मत्यागनिन्दया कर्मफलाभिसन्धित्यागः सात्त्विकत्वेन स्तूयते 'स त्यागः सात्त्विको मतः' इति॥

भा. पा. २६०.

अत्र च मुमुक्षूणां मन्दमध्यमाधिकारिणां सर्वकर्मफलत्यागपूर्वकं नित्यकर्ममात्रानुष्ठानं च विधित्सितम्

अभ्यासेऽप्यसमर्थोऽसि मत्कर्मपरमो भव ॥ १२-१०.

इति मध्यमाधिकारिणं निर्दिश्य

अथैतदप्यशक्तोऽसि कर्तुं मद्योगमाश्रितः ।
सर्वकर्मफलत्यागं ततः कुरु यतात्मवान् ॥ १२-११.

इति मन्दाधिकारिणे सर्वकर्मफलत्यागोपदेशात् ॥

अत एवाज्ञानामपि मुमुक्षूणां कर्मसंन्यासो निःश्रेयसहेतुरित्युक्तमन्यत्र –

(२) संन्यासः कर्मयोगश्च निःश्रेयसकरावुभौ ।
तयोस्तु कर्मसंन्यासात् कर्मयोगो विशिष्यते ॥ ५-२.

इति । कर्मयोगस्य विशिष्टतरत्वोक्तिस्तु अनधिकारिणः संन्यासस्य दुष्करत्वात्, कर्मयोगस्य च तदुपायत्वाच्च । तथा हि भगवद्वचनम् –

(३) संन्यासस्तु महाबाहो दुःखमाप्तुमयोगतः ।
योगयुक्तो मुनिर्ब्रह्म न चिरेणाधिगच्छति ॥ ५-६.

इति ॥

## अज्ञस्यापि मुमुक्षोरस्ति ध्यानाङ्गत्वेन कर्मसंन्यासः –

६५. सम्यग्दर्शनार्थं ध्यानयोगं प्रविविक्षोस्तु संन्यास एव विशिष्यत इति भगवतो मतम् । यत आह –

(१) आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते ।
योगारूढस्य तस्यैव शमः कारणमुच्यते ॥[1] ६-३

1. तस्मादेवंविच्छान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवात्मानं पश्यति सर्वमात्मानं पश्यति ॥ बृ. ४-४-२३; एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति ॥ बृ. ४-४-२२.

इति । कर्मणश्चित्तविक्षेपकरत्वात् । तथा हि व्याख्यातं भाष्यकारेण –

(१) योगारूढस्य पुनः तस्यैव शम उपशमः – सर्वकर्मभ्यो निवृत्तिः– कारणं योगारूढस्य साधनम् उच्यते इत्यर्थः । यावद् यावत् कर्मभ्यः उपरमते तावत् तावत् निरायासस्य जितेन्द्रियस्य चित्तं समाधीयते । तथा सति स झटिति योगारूढो भवति । तथा चोक्तं व्यासेन – नैतादृशं ब्राह्मणस्यास्ति वित्तं यथैकता समता सत्यता च । शीलं स्थितिर्दण्डनिधानमार्जवं ततस्ततश्चोपरमः क्रियाभ्यः ॥ (शां. १७५–३७) इति –

इति ॥

'एवं च कर्मयोगो विशिष्यते' (५–२) विशिष्टत्वाभिधानम् सुकरत्वमपेक्ष्य । कर्मयोगस्य संन्यासत्वेन योगत्वेन च संस्तुतिरपि तदुपायत्वमपेक्ष्य । तथा च भाष्यं पञ्चमाध्यायस्यावतरणिकायाम् –

(2) तस्मात् अनात्मविस्कर्तृकयोरेव संन्यासकर्मयोगयोर्निःश्रेयसकरत्ववचनम्, तदीयाच्च कर्मसंन्यासात् पूर्वोक्तात्मविरकर्तृकसर्वकर्मसंन्यासविलक्षणात् सत्येव कर्तृत्वविज्ञाने कर्मैकदेशविषयात्, यमनियमादिसहितत्वेन च दुरनुष्ठेयत्वात्, सुकरत्वेन च कर्मयोगस्य विशिष्टत्वाभिधानम् ॥ भा. पा. ८५.

(3) अनाश्रितः कर्मफलं कार्यं कर्म करोति यः ।
स संन्यासी च योगी च न निरग्निर्न चाक्रियः ॥ ६–१.

इत्यस्य व्याख्यानावसरे –

ननु च निरग्नेरक्रियस्यैव च श्रुतिस्मृतियोगशास्त्रेषु संन्यासित्वं योगित्वं च प्रसिद्धम् । कथमिह साग्नेः सक्रियस्य च संन्यासित्वं योगित्वं च अप्रसिद्धम् उच्यत इति ? नैष दोषः । कयाचित् गुणवृत्त्या उभयस्य संपिपादयिषितत्वात् । तत् कथम् ? कर्मफलसंकल्पसंन्यासात् संन्यासित्वम्, योगाङ्गत्वेन च कर्मानुष्ठानात् कर्मफलसङ्कल्पस्य च

चित्तविक्षेपहेतोः परित्यागात् योगित्वं च – इति गौणम् उभयम्, न पुनर्मुख्यं संन्यासित्वं योगित्वं च अभिप्रेतम् ॥ भा॰ पा॰ १००.

## ज्ञानिनां सर्वकर्मसंन्यासो मुख्यः –

६६. ज्ञानिनां तु अशेषकर्मणां संन्यासः सर्वथाप्युपपद्यते निष्क्रियात्मस्वरूपेणैवावस्थानात् । तथा हि अज्ञस्य कर्मकर्तव्यतोपदेश-प्रकरणे –

(१) न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते ।
न च संन्यसनादेव सिद्धिं समधिगच्छति ॥ ३-४.

इति नैष्कर्म्यस्य कथञ्चित् प्राप्तिरस्तीति सूचितम्, कर्मणा चित्तशुद्धिद्वारा सिद्धिं प्राप्तस्य च

(२) असक्तबुद्धिः सर्वत्र जितात्मा विगतस्पृहः ।
नैष्कर्म्यसिद्धिं परमां संन्यासेनाधिगच्छति ॥[1] १८-४९.

इति संन्यासविशेषेण नैष्कर्म्यसिद्धिरुक्ता । तथा –

(३) सर्वकर्माणि मनसा संन्यस्यास्ते सुखं वशी ।
नवद्वारे पुरे देही नैव कुर्वन् न कारयन् ॥ ५-१३.

इति च शरीरे स्थितस्यैव सर्वकर्मसंन्यासः शक्यप्रापणः – इति चोपदिष्टम् । यथा चेदं तथा ज्ञानयोगविवेके विवरिष्यामः ॥

## लोकदृष्ट्या कर्म कुर्वाणस्यापि ज्ञानिनः परमार्थसंन्यासः समस्ति–

६७. यस्तूत्पन्नसम्यग्दर्शनः कामसङ्कल्पवर्जितो भवति, तस्य कर्मणः – शास्त्रीयस्य लौकिकस्य वा – परमार्थतोऽकर्मत्वमेव

1. संन्यासयोगाद्यतयः शुद्धसत्त्वाः ॥ मुं॰ ३-२-६.

सङ्गफलाभिसन्धिवर्जितत्वात् । यथैव हि भगवतः सृष्टिकर्तुः, श्रीकृष्णरूपेणोपात्तमायाशरीरस्य वा क्षात्रं धर्मानुतिष्ठतः, तथैव प्रवृत्तस्य निवृत्तस्य वा ज्ञानिनः कर्मत्वेन व्यवहारे विभाव्यमानं वस्तुतः कर्माभासमात्रम्, स सर्वथा नित्यसंन्यस्तकर्मैवेति मन्तव्यम्, सङ्गाद्यभावात् ॥

(१) यस्य सर्वे समारम्भाः कामसङ्कल्पवर्जिताः ।
ज्ञानाग्निदग्धकर्माणं तमाहुः पण्डितं बुधाः ॥ ४–१९.
त्यक्त्वा कर्मफलासङ्गं नित्यतृप्तो निराश्रयः ।
कर्मण्यभिप्रवृत्तोऽपि नैव किञ्चित् करोति सः ॥ ४–२०.
निराशीर्यतचित्तात्मा त्यक्तसर्वपरिग्रहः ।
शारीरं केवलं कर्म कुर्वन्नाप्नोति किल्बिषम् ॥ ४–२१.

[शारीरं केवलम् – शरीरस्थितिमात्रप्रयोजनम्, सङ्गफलाभिसन्धिवर्जितं च; किल्बिषम् – धर्मम् अधर्मं वा ॥ ]

(२) चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः ।
तस्य कर्तारमपि मां विद्ध्यकर्तारमव्ययम् ॥ ४–१३
(३) न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किञ्चन ।
नानवाप्तमवाप्तव्यं वर्त एव च कर्मणि ॥ ३–२२

[त्रिषु लोकेषु – मनुष्यलोकपितृलोकदेवलोकेषु ॥]

यथा च ज्ञानिनो नित्यनिष्कर्मत्वं तथा ज्ञानयोगे निपुणतरमुपपादयिष्यते । तदेवं ज्ञानसाधनभूतस्य ध्यानयोगस्यैव तावत् कर्मसंन्यासापेक्षणात्, ज्ञानस्य च सर्वथा कर्मसहभावानुपपत्तेः समुच्चयवादो वृत्तिकाराणाम् अनुपपन्नः । एतच्च भाष्ये स्पष्टम् –

(1) यस्य यथोक्तदर्शिनः सर्वे यावन्तः समारम्भाः कर्माणि – समारभ्यन्त इति समारम्भाः – कामसङ्कल्पवर्जिताः कामैस्तत्कारणैश्च

सङ्कल्पैः वर्जिताः – मुधैव चेष्टामात्रा अनुष्ठीयन्ते, प्रवृत्तेन चेत् लोकसंग्रहार्थम्, निवृत्तेन चेत् जीवनमात्रार्थम् – तं ज्ञानाग्निदग्धकर्माणम्, कर्मादावकर्मादिदर्शनं ज्ञानम्। तदेवाग्निः, तेन ज्ञानाग्निना दग्धानि शुभाशुभलक्षणानि कर्माणि यस्य तम्, आहुः परमार्थतः पण्डितं बुधाः ब्रह्मविदः॥ भा. ४–१९, पा. ७०.

(2) त्यक्त्वा कर्मसु अभिमानं फलासङ्गं च यथोक्तेन ज्ञानेन नित्यतृप्तः। निराकाङ्क्षो विषयेषु – इत्यर्थः। निराश्रयः आश्रयरहितः। आश्रयो नाम यदाश्रित्य पुरुषार्थं सिषाधयिषति। दृष्टादृष्टेष्टफलसाधनाश्रयरहितः-इत्यर्थः। विदुषा क्रियमाणं कर्म परमार्थतः अकर्मैव। तस्य निष्क्रियात्मदर्शनसंपन्नत्वात्। तेन एवंभूतेन प्रयोजनाभावात् ससाधनं कर्म परित्यक्तव्यमेवेति प्राप्ते ततो निर्गमासंभवात् लोकसंग्रहचिकीर्षया शिष्टविगर्हणापरिजिहीर्षया वा पूर्ववत् कर्मण्यभिप्रवृत्तोऽपि निष्क्रियात्मदर्शनसंपन्नत्वात् नैव किञ्चित् करोति सः॥ भा. ४–२०, पा. ७१.

(3) निराशीः। निर्गता आशिषः यस्मात् स निराशीः। यतचित्तात्मा चित्तमन्तःकरणम् आत्मा बाह्यः कार्यकरणसङ्घातः। तौ उभावपि यतौ संयतौ येन स यतचित्तात्मा। त्यक्तसर्वपरिग्रहः। त्यक्तः सर्वः परिग्रहो येन स त्यक्तसर्वपरिग्रहः। शारीरं शरीरस्थितिमात्रप्रयोजनं केवलं तत्राप्यभिमानवर्जितम्, कर्म कुर्वन् नाप्नोति न प्राप्नोति किल्बिषम् अनिष्टरूपं पापं धर्मं च। धर्मोऽपि मुमुक्षोः किल्बिषमेव, बन्धापादकत्वात्। तस्मात् ताभ्यां मुक्तो भवति। संसारान्मुक्तो भवति–इत्यर्थः॥ भा. ४–२१, पा. ७१.

(4) यस्य तु अज्ञानात् रागादिदोषतो वा कर्मणि प्रवृत्तस्य यज्ञेन दानेन तपसा वा विशुद्धसत्त्वस्य, ज्ञानमुत्पन्नं परमार्थतत्त्वविषयम् 'एकमेवेदं सर्वं ब्रह्म, अकर्तृ च' इति। तस्य कर्मणि कर्मप्रयोजने च निवृत्तेऽपि लोकसंग्रहार्थं यत्न पूर्वं यथा प्रवृत्तिः, तथैव

कर्मणि प्रवृत्तस्य यत् प्रवृत्तिरूपं दृश्यते, न तत् कर्म, येन बुद्धेः समुच्चयः स्यात् यथा भगवतः वासुदेवस्य क्षात्रधर्मचेष्टितं न ज्ञानेन समुच्चीयते पुरुषार्थसिद्धये, तद्वत् । तत्फलाभिसन्ध्यहङ्काराभावस्य तुल्यत्वाद् विदुषः ॥ भा. २-१०, अव. पा. ११.

इति श्रीमत्परमहंसपरिव्राजकाचार्यवरेण्यश्रीपूज्यपादश्रीमच्छङ्करभगवच्चरणस्मरण-
परिचयावाप्तवेदान्तप्रवेशेन श्रीबोधानन्देन्द्रसरस्वतीशिष्येण
सच्चिदानन्देन्द्रसरस्वत्याख्येन भिक्षुणा प्रणीते
गीताशास्त्रार्थविवेके कर्मसंन्यासविवेको नाम त्रयोदशाध्यायः

---

# १४. ध्यानयोगविवेकः

## कर्मयोगानन्तरं ध्यानयोगविवेचनादाने हेतुः :-

६८. ध्यानोपासनशब्दौ वस्तुदर्शनार्थं मानसप्रयत्नविशेषे अदृष्टफलार्थे चिन्तने प्रयुज्येते इत्यावेदितं ध्यानपदार्थविवेके। तत्र शरीरप्रधानकर्मापेक्षया मनःप्रधानं ध्यानमान्तरं सूक्ष्ममिति कृत्वा कर्मयोगविवेकानन्तरं ध्यानयोगविवेकः प्राप्तावसरः। किञ्च शरीर-प्रधानेन कर्मणा भगवदाराधनार्थम् अनुष्ठितेन रजोगुणः सत्त्वोपसर्जनो भवतीति तेन रजस्तमसी शिथिलीभवतः। मनःप्रधानेन तु भगवच्ध्यानेन ते सुतरामभिभूयेते, कर्मेन्द्रियाणामिव ज्ञानेन्द्रियाणामपि संयमात् — इत्यतोऽपि कर्मयोगविवेकानन्तरं प्राप्तावसरं ध्यानयोगविवेचनम्। तत्रापि परोक्षवस्तुभावनालक्षणा क्रिया पुरुषतन्त्रत्वात् वस्तुतन्त्रज्ञान-फलकध्यानापेक्षया सुकरेति तामेव तावद् विवेचयामः॥

## विभूत्युपासने उपपत्तिः —

६९. तत्र भगवान् अर्जुनेन प्रार्थितः स्वमाहात्म्यविस्तरान् विभूत्याख्यान् ध्यानार्थम् उपादिक्षत्। न च विभूतीनाम् इयत्ता अस्तीति साधकानां प्रत्यभिज्ञानार्थं सामान्येन विभूतिलक्षणमुवाच —

(१) यद्यद् विभूतिमत् सत्त्वं श्रीमदूर्जितमेव वा।
तत्तदेवावगच्छ त्वं मम तेजोंऽशसंभवम्॥ १०-४१.

इति। यद्यपि ध्यातव्य आत्मा एक एव सर्वत्र, तथापि यत्र यत्र विभूत्याद्यतिशयः तत्र तत्र विशेषेणाविर्भूतो भवतीति स स ईश्वर

इति ध्यातव्य इति भगवतो भावः। अत एव सर्वभूतेषु हृदि स्थिते आत्मनि अतितरामाविर्भूतो[1] भगवानिति सर्वप्रथमं तमेव ध्यातव्यमुपदिदेश –

(१) अहमात्मा गुडाकेश सर्वभूताशयस्थितः।
अहमादिश्च मध्यं च भूतानामन्त एव च॥ १०–२०.

इति। भाष्यकारश्च तद् व्याचष्टे –

(1) तत्र प्रथममेव तावत् शृणु। अहम् आत्मा प्रत्यगात्मा गुडाकेश। गुडाका निद्रा, तस्या ईशः गुडाकेशः, जितनिद्र इत्यर्थः ; घनकेश इति वा। सर्वभूताशयस्थितः। सर्वेषां भूतानाम् आशये अन्तर्हृदि स्थितोऽहम् आत्मा प्रत्यगात्मा नित्यं ध्येयः। तदशक्तेन च उत्तरेषु भावेषु चिन्त्योऽहम्। यस्मात् अहमेव आदिः, भूतानां कारणम्, तथा मध्यं च स्थितिः, अन्तः प्रलयश्च॥

इति॥

## विश्वरूपोपासनस्य विभूत्युपासनाद् विशेषः –

७०. विभूत्यध्यायान्ते भगवान् व्यस्तविभूतीनां कथनेन न स्वमैश्वर्यं निरवशेषेणोक्तं स्यादिति कृत्स्नजगदात्मैवाहमित्युपसंहरति स –

(१) अथवा बहुनैतेन किं ज्ञातेन तवार्जुन।
विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्॥ १०–४२.

इति। तत्र भाष्यम् –

---

1. पुरुषे त्वेवाविस्तरामात्मा स हि प्रज्ञानेन संपन्नतमो विज्ञातं वदति विज्ञातं पश्यति वेद श्वस्तनं वेद लोकालोकौ मर्त्येनामृतमीप्सतीत्येवं संपन्नः॥ (ऐ॰ आ॰ २–३–२).

(1) विष्टभ्य विशेषतः स्तम्भनं दृढं कृत्वा इदं कृत्स्नं जगत् एकांशेन एकावयवेन एकपादेन सर्वभूतस्वरूपेण इत्येतत् । तथा च मन्त्रवर्णः 'पादोऽस्य विश्वा भूतानि' (ऋ· १०-९०-३) इति । स्थितोऽहम् इति ॥ भा· पा· १५९·

तच्च जगदात्मरूपम् आद्यमैश्वरं साक्षाच्चिकीर्षुणा अर्जुनेन प्रार्थितो भगवान् तद् विश्वरूपं दर्शितवान् 'पश्य मे पार्थ रूपाणि' (११-५) इत्यारभ्य

न तु मां शक्यसे द्रष्टुमनेनैव स्वचक्षुषा ।
दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरम् ॥ ११-८·

इत्यन्तेन वाक्येन तमनुगृह्णन् । तदेतद् रूपं सञ्जयेनाप्यनुवर्णितम् –

(२) एवमुक्त्वा ततो राजन् महायोगेश्वरो हरिः ।
दर्शयामास पार्थाय परमं रूपमैश्वरम् ॥ ११-९

इत्यारभ्य

तत्रैकस्थं जगत् कृत्स्नं प्रविभक्तमनेकधा ।
अपश्यद् देवदेवस्य शरीरे पाण्डवस्तदा ॥ ११-१३·

इत्येतदन्तं यावत् । अर्जुनेनापि स्वानुभवमाविष्कुर्वता –

(३) पश्यामि देवांस्तव देव देहे
सर्वांस्तथा भूतविशेषसङ्घान् ।
ब्रह्माणमीशं कमलासनस्थं
ऋषींश्च सर्वानुरगांश्च दिव्यान् ॥ ११-१५·

इत्यादिना । तदेतत् साकारं जगदात्मरूपमुपदिष्टं दर्शितं च उपासनार्थमेवेति भगवता स्पष्टमुक्तम् उपसंहारवाक्ये –

(४) मत्कर्मकृन्मत्परमो मद्भक्तः सङ्गवर्जितः ।
निर्वैरः सर्वभूतेषु यः स मामेति पाण्डव ॥ ११-५५·

['सङ्गवर्जितः' इति न केवलम् कर्मणि उपासनाक्रियायां वा, किं तु बाह्यविषयमात्रेऽपि । 'धनपुत्रमित्रकलत्रबन्धुवर्गेषु' इति भाष्यात् ॥]

अत्र च श्लोकावतरणिकाभाष्यम् —

(2) अधुना सर्वस्य गीताशास्त्रस्य सारभूतोऽर्थो निःश्रेयसार्थः, अनुष्ठेयत्वेन समुच्चित्योच्यते ॥ भा. ११–५५, पा. १७९.

इति । तत्र विभूत्युपासने तत्तद्विभूत्यां तत्तद्गुणविशिष्टत्वेन भगवद्-दृष्टिः कर्तव्या न त्वाकारविशेषे इति स्पष्टम् । न हि विभूतिषु सर्वत्र यः कश्चिदाकारोऽप्यनुगतोऽस्तीति शक्यते कल्पयितुम् । विश्वरूपे तु यथावर्णितरूपविशिष्टो निरतिशयज्ञानैश्वर्यशक्तिबलादिमानिति भगवान् उपास्यः । यथाशास्त्रसमर्पितस्यैव सर्वत्र ध्यातव्यत्वात् । उभयत्रापि च ध्यानोपासनचिन्तनादिशब्दैर्व्यपदेश्यः पुरुषप्रयत्नसाध्यो भावनाविशेष एव विधीयत इति श्लिष्यते । ईश्वरस्य ध्यानदशायां परोक्षत्वात् ॥

विश्वरूपध्यानारोहणे क्रमः —

७१. यथोक्तमुपासनाद्वयं सोपाधिकब्रह्मविषयम् ; तत्तदुपाधि-विशिष्टत्वेनैवोपास्यत्वात् । तत्र विश्वरूपोपासने न सर्वैरपि सहसा यथावद् ध्येयरूपे चित्तसमाधानं शक्यसंपादनम् इति तत्राशक्तस्योत्त-रोत्तरं सुकरमनुष्ठानम् अवरोहणक्रमेणोपदिष्टमत्र —

(१) मय्येव मन आधत्स्व मयि बुद्धिं निवेशय ।
निवसिष्यसि मय्येव अत ऊर्ध्वं न संशयः ॥ १२–८

(२) अथ चित्तं समाधातुं न शक्नोषि मयि स्थिरम् ।
अभ्यासयोगेन ततो मामिच्छाप्तुं धनञ्जय ॥ १२–९.

(३) अभ्यासेऽप्यसमर्थोऽसि मत्कर्मपरमो भव ।
मदर्थमपि कर्माणि कुर्वन् सिद्धिमवाप्स्यसि ॥ १२–१०.

(४) अथैतदप्यशक्तोऽसि कर्तुं मद्योगमाश्रितः ।
सर्वकर्मफलत्यागं ततः कुरु यतात्मवान् ॥ १२–११.

इति। अत्र हि सङ्गफलाभिसन्धिवर्जं नित्यकर्मानुष्ठानम्, ततो भगवदर्थत्वेन कर्मानुष्ठानम्, ततः शुद्धचित्तेन भगवति विश्वरूपे चित्तसमाधानाभ्यासः, तस्मिंश्चाभ्यासे वशीकृते भगवत्येव निश्चलं मनोबुद्धिस्थापनं च – इति पूर्वपूर्वानुष्ठाने कुशलस्यैव उत्तरस्मिन्नुत्तरस्मिन् अधिकारः, विश्वरूपोपासनेन तत्साक्षात्कारे संपादिते शरीरपातादूर्ध्वं तदात्मनैव भगवति निवासः – इति भूमिकारोहणक्रम उपदिष्टः। अत्राजस्रं भगवच्चिन्तनेन संपादिततत्साक्षात्कारस्य भगवत्प्राप्तिस्तु –

(५) यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेवरम्।
तं तमेवैति कौन्तेय सदा तद्भावभावितः॥ ८-६

इति न्यायेनेति ज्ञेयम्॥

## निरुपाधिकब्रह्मध्यानम् –

७२. अथाष्टमेऽध्याये निरुपाधिकस्यापि भगवतो ध्यानम् उपदिष्टम् –

(१) यदक्षरं वेदविदो वदन्ति
विशन्ति यद् यतयो वीतरागाः।
यदिच्छन्तो ब्रह्मचर्यं चरन्ति
तत् ते पदं संग्रहेण प्रवक्ष्ये॥ ८-११.

इत्यादिना। तत्र तु न कर्मिणामधिकारः। ब्रह्मण आलम्बनत्वेन केवलोङ्कारस्य निरन्तरोपासनाया यावज्जीवं कर्तव्यतया चोदनात्। 'यतयः', 'ब्रह्मचर्यं चरन्ति' – इत्यधिकारिविशेषणात्, काठकगतमन्त्रेणैकार्थ्यत्वाच्च[1] श्लोकस्य॥

---

1. सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद् वदन्ति।
यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण ब्रवीम्योमित्येतत्॥
का. १-२-१५.

(२) सर्वद्वाराणि संयम्य मनो हृदि निरुध्य च ।
मूर्ध्न्याधायात्मनः प्राणमास्थितो योगधारणाम् ॥ ८-१२.

ओमित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन् ।
यः प्रयाति त्यजन् देहं स याति परमां गतिम् ॥ ८-१३.

अनन्यचेताः सततं यो मां स्मरति नित्यशः ।
तस्याहं सुलभः पार्थ नित्ययुक्तस्य योगिनः ॥ ८-१४.

अत्र प्रश्नोपनिषदि विहितमेवोङ्कारध्यानं भगवतोक्तमित्याह भगवान् आचार्यः –

(1) [श्रुतिवचनैः] परस्य ब्रह्मणो वाचकरूपेण प्रतिमावत् प्रतीकरूपेण वा परब्रह्मप्रतिपत्तिसाधनत्वेन मन्दमध्यमबुद्धीनां विवक्षितस्य ओङ्कारस्य उपासनं कालान्तरे मुक्तिफलम् उक्तं यत् तदेव इहापि 'कविं पुराणमनुशासितारम्' (८-९), 'यदक्षरं वेदविदो वदन्ति' (८-११) इति चोपन्यस्तस्य परस्य ब्रह्मणः पूर्वोक्तरूपेण प्रतिपत्त्युपायभूतस्य ओङ्कारस्य कालान्तरमुक्तिफलम् उपासनं योगधारणासहितं वक्तव्यम् । प्रसक्तानुप्रसक्तं च यत्किञ्चित् – इत्येवमर्थं उत्तरो ग्रन्थ आरभ्यते ॥

भा॰ ८-१२, पा॰ १३०.

इति । युक्तं चैतत् । यथैव चोपनिषदि 'प्रायणान्तमोङ्कारमभिध्यायीत' (प्र. ५-१) इति विहितम् तथैवेहापि 'यः प्रयाति त्यजन् देहम्' इति प्रयाणान्तमेव विधानदर्शनात् । अथो तत्र –

(2) बाह्यविषयेभ्य उपसंहृतकरणः, समाहितचित्तो भक्त्यावेशितब्रह्मभाव ओङ्कारे आत्मप्रत्ययसन्तानाविच्छेदो भिन्नजातीयप्रत्ययान्तराखिलीकृतो निर्वातस्थदीपशिखासमोऽभिध्यानशब्दार्थः, सत्यब्रह्मचर्याहिंसाऽपरिग्रहत्यागसंन्यासशौचसन्तोषामायावित्वाद्यनेकयमनियमानुगृहीतः स एवं यावज्जीवव्रतधारणः॥ प्र॰भा॰५-१,पा॰१२८

इति च यथा अभिध्यानशब्दार्थो वर्णितः, एवम् अत्रापि 'अनुचिन्तयन्' (८-८), 'अनुस्मरन्' (८-१३) इति च 'अनुचिन्तनानुस्मरण'शब्दार्थो वर्णनीयः । यथैव च तत्रोपासनायाम् इतिकर्तव्यता वर्णिता तथैव अत्रापि –

अनन्यचेताः सततं यो मां स्मरति नित्यशः ।
तस्याहं सुलभः पार्थ नित्ययुक्तस्य योगिनः ॥ ८-१४.

इत्यस्यार्थोऽनुसंधेयः ॥

## ओङ्कारोपासकानाम् अभ्यासयोगः –

७३. यथैव विश्वरूपोपासने एवमेव इहापि ओङ्कारे 'कविं पुराणम्' (८-९) इत्यादिविशेषणविशिष्टे ब्रह्मणि सहसा चित्तं समाधातुम् अशक्नुवानस्य अभ्यासयोग उपदिश्यते, अहरहरनुष्ठीयमानस्योपासनस्य कथं नाम प्रयाणकाले तस्मिन्नेव निश्चलं मनस्तिष्ठेदिति–

(१) यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेवरम् ।
तं तमेवैति कौन्तेय सदा तद्भावभावितः ॥ ८-६.
तस्मात् सर्वेषु कालेषु मामनुस्मर युद्ध्य च ।
मय्यर्पितमनोबुद्धिर्मामेवैष्यस्यसंशयः ॥ ८-७.
अभ्यासयोगयुक्तेन चेतसा नान्यगामिना ।
परमं पुरुषं दिव्यं याति पार्थानुचिन्तयन् ॥ ८-८.

(२) अनन्यचेताः सततं यो मां स्मरति नित्यशः ।
तस्याहं सुलभः पार्थ नित्ययुक्तस्य योगिनः ॥ ८-१४.

भाष्यम् – सततमिति नैरन्तर्यमुच्यते । नित्यश इति दीर्घकालत्वमुच्यते ; न षण्मासं संवत्सरं वा, किं तर्हि यावज्जीवं[1] नैरन्तर्येण यो मां स्मरतीत्यर्थः ॥ भा. पा. १३१.

---

1. स यो ह वै तद् भगवन् मनुष्येषु प्रायणान्तमोङ्कारमभिध्यायीत ॥ प्र. ५-१.

(३) 'प्रयाणकाले मनसाऽचलेन ।' (८-१०), 'मामनुस्मरन् । यः प्रयाति त्यजन् देहम् ।' (८-१३).

इति च विशेषवचनात् ॥

## प्रणवालम्बनानां निर्गुणोपासकानां शुक्लमार्गेण ब्रह्मप्राप्तिः –

७४. इदं चोपासनं यथैव वेदान्तेषु तथैवेहापि अग्न्यादिदेवताप्राप्तिक्रमेणोत्तरायणेन पथा[1] गतानां पुनरावृत्तिरहितब्रह्मप्राप्तिफलकम् ॥

(१) अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् ।
तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः ॥[2] ८-२४.

धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम् ।
तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते ॥ ८-२५.

शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते ।
एकया यात्यनावृत्तिमन्ययाऽऽवर्तते पुनः ॥ ८-२६.

भाष्यम्-(1) प्रकृतानां योगिनां प्रणवावेशितब्रह्मबुद्धीनां कालान्तरमुक्तिभाजां ब्रह्मप्रतिपत्तये उत्तरो मार्गो वक्तव्यः इति 'यत्र काले'

---

1. अयमेवार्चिरादिमार्गः । (वे. सू. ४-३-१).

2. (१) तेऽर्चिरभिसंभवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान् षण्मासानुदङ्ङादित्य एति मासेभ्यो देवलोकं देवलोकादादित्यमादित्याद् वैद्युतं तान् वैद्युतान् पुरुषो मानस एत्य ब्रह्मलोकान् गमयति ते तेषु ब्रह्मलोकेषु पराः परावतो वसन्ति तेषां न पुनरावृत्तिः ॥ बृ. ६-२-१५. (२) स सामभिरुन्नीयते ब्रह्मलोकं स एतस्माज्जीवघनात् परात्परं पुरि शयं पुरुषमीक्षते ॥ प्र. ५-५.

इत्यादि विवक्षितार्थसमर्पणार्थमुच्यते । आवृत्तिमार्गोपन्यासः इतर-मार्गस्तुत्यर्थः ॥ भा. ८-२३, अव. पा. १३४.

(2) अग्निः कालाभिमानिनी देवता । तथा ज्योतिरपि देवतैव कालाभिमानिनी । अथवा अग्निज्योतिषी यथाश्रुते एव देवते । भूयसा तु निर्देशः 'यत्र काले', 'तं कालम्' इति, आम्रवणवत् । तथा अहर्देवता अहरभिमानिनी शुक्लः शुक्लपक्षदेवता षण्मासा उत्तरायणम् । तत्रापि देवतैव मार्गभूता इति स्थितोऽन्यत्रायं न्यायः[1] । तत्र तस्मिन् मार्गे प्रयाता मृता गच्छन्ति ब्रह्म ब्रह्मविदः ब्रह्मोपासका ब्रह्मोपासनपरा जनाः । 'क्रमेण' इति वाक्यशेषः ॥ भा. ८-२४, पा. १३४.

## मनस आत्मनि विलयनमेव ज्ञानार्थं ध्यानम् –

७५. अथ सम्यग्दर्शनार्थं ध्यानं विवेचनीयम् । तच्च पञ्चमान्ते सूत्रितम् –

(१) स्पर्शान् कृत्वा बहिर्बाह्यांश्चक्षुश्चैवान्तरे भ्रुवोः ।
प्राणापानौ समौ कृत्वा नासाभ्यन्तरचारिणौ ॥[2] ५-२७.
यतेन्द्रियमनोबुद्धिर्मुनिर्मोक्षपरायणः ।
विगतेच्छाभयक्रोधो यः सदा मुक्त एव सः ॥ ५-२८.

इति । षष्ठे विस्तरेणोक्तं च –

(२) संकल्पप्रभवान् कामांस्त्यक्त्वा सर्वानशेषतः ।
मनसैवेन्द्रियग्रामं विनियम्य[3] समन्ततः ॥ ६-२४.
शनैः शनैरुपरमेद् बुद्ध्या धृतिगृहीतया ।
आत्मसंस्थं मनः कृत्वा न किञ्चिदपि चिन्तयेत् ॥ ६-२५.

---

1. सू. भा. ४-२-२१.

2. प्राणान् प्रपीड्येह स युक्तचेष्टः क्षीणे प्राणे नासिकयोच्छ्वसीत ॥ श्वे. २-९.

3. दुष्टाश्वयुक्तमिव वाहमेनं विद्वान् मनो धारयेताप्रमत्तः ॥ श्वे. २-९.

भाष्यम् – आत्मसंस्थम् आत्मनि संस्थितम् 'आत्मैव सर्वम् न ततोऽन्यत् किञ्चिदस्ति' इत्येवम् आत्मसंस्थं मनः कृत्वा न किञ्चिदपि चिन्तयेत् । एष योगस्य परमोऽवधिः ॥[1]

[ आत्मनि संस्थितम् इत्याधाराधेयभावो न विवक्षित इति भाष्याशयः ॥]

(२) यतो यतो निश्चरति मनश्चञ्चलमस्थिरम् ।
ततस्ततो नियम्यैतदात्मन्येव वशं नयेत् ॥ ६–२६.

भाष्यम् – ततस्ततः, तस्मात् तस्मात् शब्दादेर्निमित्तात् नियम्य तत्तन्निमित्तं याथात्म्यनिरूपणेन आभासीकृत्य वैराग्यभावनया च एतन्मनः आत्मन्येव वशं नयेत् आत्मवश्यतामापादयेत् ॥भा.पा. १०९.

[अत्रापि न द्वैतं विवक्षितम् 'आत्मवश्यताम्' इति, आत्मस्वरूपत्वमेवापादयेदित्यर्थः – इति समनन्तरपूर्वश्लोकभाष्यवाक्यादवगम्यते ॥ ]

## दर्शनसाधनभूतस्य ध्यानस्य स्वरूपं फलं च –

७६. अयं च ध्यानयोगो न विश्वरूपोपासनावत्, अष्टमोक्तोङ्कारप्रतीकब्रह्मध्यानवद् वा केवलभावनाप्रकर्षपर्यवसायी प्रेत्यमुक्तिफलदः, किं तर्हि इहैव सम्यग्दर्शनद्वारा ब्रह्मात्मभावलक्षणः-सद्योमुक्तिफलदो रत्नादिपरीक्षावन्नित्यानन्दरूपपरमसूक्ष्मात्मवस्तुनिरीक्षणप्रयतनलक्षणः । यत आह भगवान् –

(१) प्रशान्तमनसं ह्येनं योगिनं सुखमुत्तमम् ।
उपैति शान्तरजसं ब्रह्मभूतमकल्मषम् ॥ ६–२७.

---

1. इन्द्रियाणां मनसि नियमनम् अवधिः । तस्य च बुद्धौ – इति क्रमेण आत्मन्येव सर्वप्रपञ्चशून्ये अन्तःकरणस्य विलयनम् परमोऽवधिः । तथा हि श्रुतिः–
यच्छेद् वाङ्मनसी प्राज्ञस्तद्यच्छेज्ज्ञान आत्मनि ।
ज्ञानमात्मनि महति नियच्छेत् तद्यच्छेच्छान्त आत्मनि ॥ का. १-३-१३
इति ॥

भाष्यम् - एवं योगाभ्यासबलात् योगिन आत्मन्येव प्रशाम्यति मनः। प्रशान्तमनसम्। प्रकर्षेण शान्तं मनो यस्य स प्रशान्तमनाः ; तं प्रशान्तमनसं हि एनं योगिनं सुखमुत्तमं निरतिशयम् उपैति उपगच्छति। शान्तरजसं प्रक्षीणमोहादिक्लेशरजसम् इत्यर्थः। ब्रह्मभूतं जीवन्मुक्तं 'ब्रह्मैव सर्वम्' इत्येवंनिश्चयवन्तं ब्रह्मभूतम् अकल्मषम् अधर्मादिवर्जितम् ॥ भा. पा. १०९.

[ कर्मयोगेन निरस्ततमोमलः, ध्यानयोगेन तु निरस्तसमस्तरजोमलः, शुद्धसत्त्वस्थः सन् निरतिशयानन्दरूपब्रह्मात्मभावमश्नुते इत्युक्तं भवति। एवं हि पूर्वत्र गतेन -

त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन।
निर्द्वन्द्वो नित्यसत्त्वस्थो निर्योगक्षेम आत्मवान् ॥ २-४५.

इत्यनेन एकवाक्यता अस्य श्लोकस्य संपद्यत इति ॥ ]

(२) सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि।
ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः ॥[1] ६-२९.

## सम्यग्दर्शनार्थध्यानापेक्षिताभ्यासस्वरूपम् -

७७. अयमपि ध्यानयोगो विश्वरूपादिध्यानवदभ्यासेनैव स्वायत्तो भवेत्। अभ्यासस्त्वत्र न भावनाभ्यासः, किं तु आत्मनः स्वानुभवगोचरतापादने प्रयत्न एवेति न प्रसर्तव्यम् -

(१) असंशयं महाबाहो मनो दुर्निग्रहं चलम्।
अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते ॥ ६-३५.

---

1. तस्मादेवंविच्छन्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवात्मानं पश्यति सर्वमात्मानं पश्यति ॥ बृ. ४-४-२३.

यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति।
सर्वभूतेषु चात्मानं ततो न विजुगुप्सते ॥ ई. ६.

भाष्यम् – श्रीभगवानुवाच । एवमेतद् यथा ब्रवीषि । असंशयं नास्ति संशयो मनो दुर्निग्रहं चलम् इत्यत्र, हे महाबाहो । किं तु अभ्यासेन – अभ्यासो नाम चित्तभूमौ कस्याञ्चित् समानप्रत्ययावृत्तिश्चित्तस्य । वैराग्येण – वैराग्यं नाम दृष्टादृष्टेष्टभोगेषु दोषदर्शनाभ्यासाद् वैतृष्ण्यम् ; तेन च वैराग्येण गृह्यते विक्षेपरूपः प्रचारश्चित्तस्य । एवं तन्मनो गृह्यते निगृह्यते निरुध्यते इत्यर्थः ॥ पा. ११२.

[चित्तभूमिः – इत्यनेन इन्द्रियमनोबुद्धीनां आत्मत्वेन विभाव्यमानानाम् अन्यतमविषया गृह्यते । 'शनैः शनैरुपरमेत्' इत्यत्रैतदेव हि सूचितम् । वैराग्यं च योगिनापि संन्यस्तकर्मणा संपादनीयं वैतृष्ण्यम् 'शमः कारणमुच्यते' इत्यनेन सूचितम् । 'विक्षेपरूपः प्रचारः', वहिर्मुखा वृत्तिः । 'निगृह्यते', 'निरुध्यते' – इत्युभयोरपि पर्यायत्वसूचनम्, मनोनिग्रहचित्तनिरोधशब्दयोरेकार्थत्वम्, परमात्मरूपेण चित्तस्य निष्पत्तिरेव तदर्थः – इत्याशयेन । अयमेवाभ्यासो निदिध्यासनशब्देन श्रुत्यभिहितः ॥ ]

## ध्यानयोगपदार्थः, ध्यानस्य भक्तिपर्यवसायित्वं च –

७८. ध्यानयोगशब्दोऽयं पदार्थद्वयवाचकत्वेन व्याख्यातः । अष्टादशाध्यायभाष्ये 'ध्यानयोगपरो नित्यम्' (१८–५२) इत्यत्र । अयमेव योगो 'ब्रह्मयोगः' इत्यपि व्यवहृतो भगवता । अयमेव च सर्वदुःखसंयोगवियोगलक्षणयोगपर्यवसायी भगवद्विषयत्वेन च भक्तियोगो भवति, ज्ञाननिष्ठालक्षणचतुर्थभक्तिलाभहेतुश्चेत्यनुपदमेव विवरिष्यते भक्तियोगविवेके –

(१) विविक्तसेवी[1] लघ्वाशी यतवाक्कायमानसः ।
ध्यानयोगपरो नित्यं वैराग्यं समुपाश्रितः ॥

[ ज्ञाननिष्ठा कथं कार्या – इत्येतद् विशदयितुं प्रवृत्तः श्लोकः ॥ ]

---

1. समे शुचौ शर्करवह्निवालुकाविवर्जिते शब्दजलाश्रयादिभिः । मनोऽनुकूले न तु चक्षुपीडने गुहानिवाताश्रयणे प्रयोजयेत् ॥ श्वे. २–१०.

भाष्यम् – (1) एवमुपरतसर्वकरणः सन् ध्यानयोगपरः । ध्यानम् आत्मस्वरूपचिन्तनम् । योगः आत्मविषये एवैकाग्रीकरणम् ; तौ ध्यानयोगौ परत्वेन कर्तव्यौ यस्य स ध्यानयोगपरः । नित्यग्रहणं मन्त्र-जपाद्यन्यकर्तव्याभावप्रदर्शनार्थम् ॥ भा॰ १८-५२, पा॰ २८२.

(२) बाह्यस्पर्शेष्वसक्तात्मा विन्दत्यात्मनि यत्सुखम् ।
स ब्रह्मयोगयुक्तात्मा सुखमक्षयमश्नुते ॥ ५-२१.

भाष्यम् – (2) बाह्यस्पर्शेषु बाह्याश्च ते स्पर्शाश्च बाह्यस्पर्शाः । स्पृश्यन्त इति स्पर्शाः शब्दादयो विषयाः, तेषु बाह्यस्पर्शेषु, असक्तः आत्मा अन्तःकरणं यस्य सोऽयम् असक्तात्मा, विषयेषु प्रीतिवर्जितः सन् विन्दति लभते आत्मनि यत् सुखम्, तद् विन्दति इत्येतत् । स ब्रह्मयोग-युक्तात्मा । ब्रह्मणि योगः समाधिः ब्रह्मयोगः, तेन ब्रह्मयोगेन युक्तः समाहितः । तस्मिन् व्यापृत आत्मा अन्तःकरणं यस्य स ब्रह्मयोग-युक्तात्मा सुखम् अक्षयम् अश्नुते व्याप्नोति ॥ भा॰ पा॰ ९४.

(३) यत्रोपरमते चित्तं निरुद्धं योगसेवया ।
यत्र चैवात्मनात्मानं पश्यन्नात्मनि तुष्यति ॥
सुखमात्यन्तिकं यत्तद् बुद्धिग्राह्यमतीन्द्रियम् ।
वेत्ति यत्र न चैवायं स्थितश्चलति तत्त्वतः ॥
यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः ।
यस्मिन्स्थितो न दुःखेन गुरुणापि विचाल्यते ॥
तं विद्याद् दुःखसंयोगवियोगं योगसंज्ञितम् ।
स निश्चयेन योक्तव्यो योगोऽनिर्विण्णचेतसा ॥ ६-२०—२३.

[ अत्र योगाभ्यासफलभूता अवस्थैव परमानन्दात्मनि तादात्म्यभावेन समाधिरूपा योगशब्दशब्दिता इति स्पष्टम् ॥ ]

इति श्रीमत्परमहंसपरिव्राजकाचार्यवरेण्यश्रीपूज्यपादश्रीमच्छङ्करभगवच्चरणस्मरण-परिचयावाप्तवेदान्तप्रवेशेन श्रीबोधानन्देन्द्रसरस्वतीशिष्येण सच्चिदानन्देन्द्रसरस्वत्याख्येन भिक्षुणा प्रणीते गीताशास्त्रार्थविवेके ध्यानयोगविवेको नाम चतुर्दशोऽध्यायः

---

# १५. भक्तियोगविवेकः

## कर्मयोगध्यानयोगयोः रहस्यं भक्तियोगः –

७९. कर्मयोगो ध्यानयोगश्चेत्येतौ गुणत्रयसङ्गात् पुरुषं मोचयतः। तत्र कर्मणि सङ्गं कर्मफलाभिसन्धिं च परित्यज्य भगवदर्थं कर्म कुर्वाणस्य सिद्धिर्लभ्यते –

(१) यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम्।
स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः॥ १८-४६.

इत्युक्तेः। तत्र सिद्धिर्ज्ञाननिष्ठायोग्यता मता। सा च स्ववर्णविहितं कर्म भगवदाराधनबुद्ध्या कुर्वत एव भवति,

(२) स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः।
स्वकर्मनिरतः सिद्धिं यथा विन्दति तच्छृणु॥ १८-४५.

इति ब्राह्मणादिवर्णाश्रमकर्मपरामर्शेनैव 'स्वकर्मणा तमभ्यर्च्य' इति वचनात् – इत्यतः कर्मयोगस्य रहस्यं भक्तियोगः॥

एवं ध्यानयोगस्यापि। तत्र यद्यपि देवतान्तरध्याय्यपि योगी भवेत्, तथापि यतचित्तेन्द्रियो भूत्वा भगवच्चित्ततया तात्पर्येण ध्यायन्नेवात्र ध्यानयोगी विवक्ष्यते। तस्यैव च दीर्घकालमुपचितध्यानसंस्कारेण विधूतरजस्तमोमलस्य योगसंसिद्धिर्भवति। तादृशसंस्कारोपचयश्च भगवति श्रद्धाभक्तिलक्षणसत्कारेण – इत्यतो ध्यानयोगस्य परमरहस्यं भक्तियोगः॥

12

उक्तं हि –

(२) प्रशान्तात्मा विगतभीर्ब्रह्मचारिव्रते स्थितः ।
मनः संयम्य मच्चित्तो युक्त आसीत मत्परः ॥ ६-१४.
प्रयत्नाद् यतमानस्तु योगी संशुद्धकिल्बिषः ।
अनेकजन्मसंसिद्धस्ततो याति परां गतिम् ॥ ६-४५.
योगिनामपि सर्वेषां मद्गतेनान्तरात्मना ।
श्रद्धावान् भजते यो मां स मे युक्ततमो मतः ॥ ६-४७.

[अत्र संसिद्धिर्नाम सम्यग्ज्ञानमात्मतत्त्वस्य ॥]

इति ॥

## कर्मयोगस्य ध्यानयोगस्य च सिद्धिः –

८०. यद्यपि यज्ञदानतपआत्मकं कर्म शास्त्रविहितमेव कर्मयोगे अनुष्ठीयते, तथापि न तत एव साक्षात् ज्ञानोत्पत्तिर्भवेत्, अपि तु सत्त्वशुद्धिद्वारेणैव । एवं ध्यानमपि शास्त्रविहितम् उपासनालक्षणम्, अध्यात्मयोगलक्षणं वा – न स्वत एव साक्षात् सम्यग्दर्शनकारणम् अपि तु सत्त्वविशुद्धिद्वारेणैव –

(१) कायेन मनसा बुद्ध्या केवलैरिन्द्रियैरपि ।
योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वाऽऽत्मशुद्धये ॥ ५-११.
(२) तत्रैकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रियः ।
उपविश्यासने युञ्ज्याद् योगमात्मविशुद्धये ॥ ६-१२.

इति वचनात् ॥

कर्मणा तमोजयः, रजआत्मककर्माश्रयणात् । ध्यानेन रजसोऽपि जयः सात्त्विकस्य ध्यानस्याश्रयणात् – इत्येवं तमसो रजसश्चाभिभवः सिध्येत् ;

(३) रजस्तमश्चाभिभूय सत्त्वं भवति भारत ।
रजः सत्त्वं तमश्चैव तमः सत्त्वं रजस्तथा ॥ १४-१०.

इत्येवं रजसः सत्त्वस्य च स्वेतरगुणद्वयाभिभावकत्वस्मरणात् । तथापि न केवलकर्माश्रयणेन, केवलध्यानाश्रयणेन वा यत्किञ्चिद्ध्येयालम्बनेन वा सर्वथा गुणत्रयाभिघातः ; एकस्य गुणस्योद्भवे तदितरयोरभिभूतत्वेऽपि बीजरूपेण लब्धसंस्थितिकत्वात् । शुद्धसत्त्वमात्रावलम्बनेन तु कृतेन भगवद्विषयकेण योगेन प्रहीणकामो गुणत्रयप्रहाणाय प्रभवेत् । यदाह भगवान् –

(४) त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन ।
निर्द्वन्द्वो नित्यसत्त्वस्थो निर्योगक्षेम आत्मवान् ॥ २–४५.

इति ॥

## कर्मयोगध्यानयोगयोर्योगत्वं भगवत्संबन्धात् –

८१. कर्मणः कर्मयोगत्वापत्तिः, ध्यानस्य ध्यानयोगत्वापत्तिश्च भगवत्संबन्धादेव । 'स्वकर्मणा तमभ्यर्च्य', 'योगिनामपि सर्वेषाम्'– इति च यथोदाहृतवचनाभ्याम् । एवमाचरितो योगः क्रमेण भक्तियोगत्वमापद्यते गुणातीतत्वसाधनत्वं च प्रतिपद्यते – इति भगवानेवाऽऽह –

(१) मां च योऽव्यभिचारेण भक्तियोगेन सेवते ।
स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पते ॥ १४–२६.

इति ॥

भाष्यम् – "मां च ईश्वरं नारायणं सर्वभूतहृदयाश्रितं यो यतिः कर्मी वा ? अव्यभिचारेण न कदाचित् यो व्यभिचरति भक्तियोगेन, भजनं भक्तिः सैव योगः, तेन भक्तियोगेन सेवते ; स गुणान् समतीत्य एतान् यथोक्तान् ब्रह्मभूयाय – भवनं भूयः ब्रह्मभूयाय ब्रह्मभवनाय – मोक्षाय कल्पते समर्थो भवति इत्यर्थः ॥ भा॰ पा॰ २२६–२२७.

## कर्मयोगादीनां भगवद्विषयकत्वादेव अर्थकरत्वम् –

८२. भगवदनुग्रहद्वारेणैव सकलपुरुषार्थसिद्धिर्यस्मात्, तस्मात्

कर्मयोगो वा ध्यानयोगो वा ज्ञानयोगो वा अन्यो वा यः कश्चित्, स सर्वोऽपि भक्तिद्वारेणैवार्थकरो भवेन्नान्यथा इत्युच्यतेऽत्र –

(१) यत् करोषि यदश्नासि यज्जुहोषि ददासि यत् ।
यत् तपस्यसि कौन्तेय तत् कुरुष्व मदर्पणम् ॥ ९-२७.
शुभाशुभफलैरेवं मोक्ष्यसे कर्मबन्धनैः ।
संन्यासयोगयुक्तात्मा विमुक्तो मामुपैष्यसि ॥ ९-२८.

भाष्यम् – सोऽयं संन्यासयोगो नाम । संन्यासश्च असौ मत्समर्पणतया कर्मत्वाद् योगश्च असौ इति । तेन संन्यासयोगेन युक्त आत्मा अन्तःकरणं यस्य तव स त्वं संन्यासयोगयुक्तात्मा सन् विमुक्तः कर्मबन्धनैः जीवन्नेव । पतिते च अस्मिन् शरीरे मामुपैष्यसि आगमिष्यसि ॥ भा. पा. १४६.

[अत्र कर्मयोगफलसिद्धिर्भगवदाश्रयणादित्युक्तम् ॥]

(२) मय्यासक्तमनाः पार्थ योगं युञ्जन् मदाश्रयः ।
असंशयं समग्रं मां यथा ज्ञास्यसि तच्छृणु ॥ ७-१.

भाष्यम् – यो हि कश्चित् पुरुषार्थेन केनचिदर्थी भवति, स तत्साधनं कर्म अग्निहोत्रादि, तपः, दानं वा किञ्चिदाश्रयं प्रतिपद्यते । अयं तु योगी मामेवाश्रयं प्रतिपद्यते हित्वा अन्यत् साधनान्तरं मय्येव आसक्तमना भवति । यस्त्वम् एवंभूतः सन् असंशयं समग्रं समस्तं विभूतिबलशक्त्यैश्वर्यादिगुणसंपन्नं मां यथा येन प्रकारेण ज्ञास्यसि संशयमन्तरेण 'एवमेव भगवान्' इति, तच्छृणु उच्यमानं मया ॥ भा.पा. ११६.

[अत्र योगफलसंसिद्धिर्भगवदाश्रयणादेवेत्युक्तम् ॥]

(३) प्रयाणकाले मनसाऽचलेन
भक्त्या युक्तो योगबलेन चैव ।
भ्रुवोर्मध्ये प्राणमावेश्य सम्यक्
स तं परं पुरुषमुपैति दिव्यम् ॥ ८-१०.

[अत्र धारणायोगफलसिद्धिर्भक्तिद्वारेणैवेत्युक्तम् ॥]

(४) ज्ञानयज्ञेन चाप्यन्ये यजन्तो मामुपासते ।
एकत्वेन पृथक्त्वेन[1] बहुधा विश्वतोमुखम् ॥ ९-१५.

[ अत्र ज्ञानयोगिनोऽपि भक्त्यैवोपासते परमात्मानमित्युक्तम् ॥ ]

## भक्त्यतिशयप्राप्तिनान्तरीयकी सम्यग्ज्ञानप्राप्तिः –

८३. यद्यपि ज्ञानादेव कैवल्यमिति वेदान्तसिद्धान्त एवानुसृतोऽत्रापि, तथापि भक्त्यतिशयप्राप्तिनान्तरीयकी भगवदनुग्रहात् सम्यग्ज्ञानप्राप्तिरिति सावधारणमुच्यते सर्वत्र गीतासु –

(१) तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् ।
ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥[2] १०-१०.
तेषामेवानुकम्पार्थमहमज्ञानजं तमः ।
नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता ॥[3] १०-११.

भाष्यम् – (1) तेषामेव कथं नु नाम श्रेयः स्यात् ? – इत्यनुकम्पार्थं दयाहेतोः, अहम् अज्ञानजम् अविवेकतो जातं मिथ्याप्रत्ययलक्षणं मोहान्धकारं तमः नाशयामि आत्मभावस्थः । आत्मनो भावः अन्तःकरणाशयः तस्मिन्नेव स्थितः सन् ॥ भा. पा. १५२.

अत एव ज्ञानसाधनेषु मध्ये भक्तिरपि पठिता, ज्ञानवर्णनोपसंहारे च पुनरप्यनुस्मारिता –

---

1. 'स होवाच बालाकिर्य एवैष आदित्ये पुरुषस्तमेवाहमुपासे' इत्यादि (कौ. ४-२ प्रभृति १७ पर्यन्तम्) पृथक्त्वेन, 'यो वै बालाक एतेषां पुरुषाणां कर्ता' इति चैकत्वेन (कौ. ४-१८) ॥

2. 'स नो बुद्ध्या शुभया संयुनक्तु' ॥ श्वे. ४-१.

3. तꣳह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये ॥ श्वे. ६-१८.

(२) मयि चानन्ययोगेन भक्तिरव्यभिचारिणी ॥ १३-१०.

भाष्यम् – (2) मयि च ईश्वरे अनन्ययोगेन अपृथक्समाधिना 'नान्यो भगवतो वासुदेवात् परोऽस्ति, अतः स एव नो गतिः' इत्येवं निश्चिता अव्यभिचारिणी बुद्धिः, अनन्ययोगः । तेन भजनं भक्तिः, न व्यभिचरणशीला अव्यभिचारिणी ॥ भा. पा. २००-२०१.

(३) इति क्षेत्रं तथा ज्ञानं ज्ञेयं चोक्तं समासतः ।
मद्भक्त एतद् विज्ञाय मद्भावायोपपद्यते ॥ १३-१८.

भाष्यम्-(3) एतावान् सर्वो हि वेदार्थः, गीतार्थश्च – उपसंहृत्य उक्तः । अस्मिन् सम्यग्दर्शने कोऽधिक्रियत इति ? उच्यते – मद्भक्तः । मयि ईश्वरे सर्वज्ञे परमगुरौ वासुदेवे समर्पितसर्वात्मभावः, यत् पश्यति, श्रृणोति, स्पृशति वा सर्वमेव भगवान् वासुदेवः इत्येवंग्रहाविष्टबुद्धि-र्मद्भक्तः । स एतद् यथोक्तं सम्यग्दर्शनं विज्ञाय मद्भावाय । मम भावो मद्भावः । परमात्मभावः । तस्मै मद्भावाय उपपद्यते । मोक्षं गच्छति ॥ भा. पा. २०६.

इति ॥

## अनधिकारिणामपि भक्तिमाहात्म्यात् क्रमेण परमपुरुषार्थप्राप्तिः–

८४. अनधिकारिणामपि प्राक्कृतपुण्यवशात् कथञ्चित् भगवन्त-माश्रितानां भक्तिमाहात्म्यादेव क्षीणपापानां धर्मबुद्धिः, अध्यात्मविद्या-साधनानुष्ठानम्, सम्यग्दर्शनोत्पत्तिः परब्रह्मप्राप्तिश्च अवश्यं भवतीति भगवता प्रतिश्रुतमत्र । अतो मनुष्यत्वं प्राप्तवता सर्वयत्नेनापि भक्तिः संपादनीया ॥

(१) अपि चेत् सुदुराचारो भजते मामनन्यभाक् ।
साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः ॥ ९-३०.
क्षिप्रं भवति धर्मात्मा शश्वच्छान्तिं निगच्छति ।
कौन्तेय प्रतिजानीहि न मे भक्तः प्रणश्यति ॥ ९-३१.

(२) मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः ।
स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम् ॥ ९-३२.
किं पुनर्ब्राह्मणाः पुण्या भक्ता राजर्षयस्तथा ।
अनित्यमसुखं लोकमिमं प्राप्य भजस्व माम् ॥ ९-३३.

[स्त्रीशूद्रादयः – वेदानधिकारिणः, वैश्याः – अपरिहार्यदोषे कृषिवाणिज्यादौ रताः। तेऽपि मोक्षं यान्ति भक्तिमहिम्ना, किं पुनः धर्माचरणे धर्मरक्षणे च रता भक्ताः ? ]

## भक्तेर्महाभागत्वम् –

८५. यज्ञध्यानादिकर्मसु भगवद्व्यपाश्रयणे एव विनियुक्तेषु सर्वस्याऽऽत्मा भगवान् निःसंशयं प्राप्यते –

मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।
मामेवैष्यसि युक्त्वैवमात्मानं मत्परायणः ॥ ९-३४.

तदित्थं महाभागा भक्तिरेव गरिष्ठा सर्वेष्वपि भगवत्प्राप्तिसाधनेष्वपीति पुनःपुनरुच्यते गीतास्विति न प्रस्मर्तव्यम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यवरेण्यश्रीपूज्यपादश्रीमच्छङ्करभगवच्चरणसरण-
परिचयावाप्तवेदान्तप्रवेशेन श्रीबोधानन्देन्द्रसरस्वतीशिष्येण
सच्चिदानन्देन्द्रसरस्वत्याख्येन भिक्षुणा प्रणीते
गीताशास्त्रार्थविवेके भक्तियोगविवेको नाम पञ्चदशोऽध्यायः

# १६. ज्ञानयोगविवेकः

**प्रकृतिपुरुषसंयोगः संसारहेतुः, तदभावगमनज्ञानं मोक्षहेतुः –**

८६. कर्मयोगध्यानयोगयोर्भक्तियोगत्वेन परिणतयोरेव ज्ञानजनकत्वमित्येतद् दर्शितं गतेन ग्रन्थेन । अथेदानीं गीताशास्त्राभिमतज्ञानस्वरूपं तत्फलं च प्रविविच्यते । तत्र क्षेत्रक्षेत्रज्ञयोः प्रकृतिपुरुषयोर्भगवतः परापरप्रकृत्योर्मिथ्याज्ञानलक्षणः संयोगः संसारहेतुः, पुरुषस्य सम्यग्ज्ञानप्रभावाद् भूतप्रकृतिमोक्षणेन स्वात्मभूते भगवति नित्यशुद्धबुद्धमुक्तस्वभाव एव तादात्म्येनावस्थानं परमपुरुषार्थः – इति शास्त्रार्थसंक्षेपः ॥

(१) यावत् सञ्जायते किञ्चित् सत्त्वं स्थावरजङ्गमम् ।
क्षेत्रक्षेत्रज्ञसंयोगात् तद् विद्धि भरतर्षभ ॥ १३-२६.

भाष्यम् – (1) क्षेत्रक्षेत्रज्ञयोर्विषयविषयिणोर्भिन्नस्वभावयोरितरेतरतद्धर्माध्यासलक्षणः संयोगः क्षेत्रक्षेत्रज्ञस्वरूपविवेकाभावनिबन्धनः, रज्जुशुक्तिकादीनां तद्विवेकज्ञानाभावादध्यारोपितसर्परजतादिसंयोगवत् । सोऽयम् अध्यासस्वरूपः क्षेत्रक्षेत्रज्ञसंयोगो मिथ्याज्ञानलक्षणः । यथाशास्त्रं क्षेत्रक्षेत्रज्ञलक्षणभेदपरिज्ञानपूर्वकं प्राग्दर्शितरूपात् क्षेत्रात्, मुञ्जादिवेषीकां यथोक्तलक्षणं क्षेत्रज्ञं प्रविभज्य 'न सत्तन्नासदुच्यते' इत्यनेन निरस्तसर्वोपाधिविशेषं ज्ञेयं ब्रह्म स्वरूपेण यः पश्यति, क्षेत्रं च मायानिर्मितहस्तिस्वप्नदृष्टवस्तुगन्धर्वनगरादिवत् 'असदेव सदिवावभासते' इत्येवंनिश्चितविज्ञानो यः, तस्य यथोक्तसम्यग्दर्शनविरोधात् अपगच्छति मिथ्याज्ञानम् । तस्य जन्महेतोरपगमात् 'य एवं वेत्ति पुरुषं प्रकृतिं च गुणैः सह' इत्यनेन 'विद्वान् भूयो न जायते' इति यदुक्तम्, तदुपपन्नम् ॥ भा. पा. २१३.

(२) क्षेत्रक्षेत्रज्ञयोरेवमन्तरं ज्ञानचक्षुषा ।
भूतप्रकृतिमोक्षं च ये विदुर्यान्ति ते परम् ॥ १३-३४.

[अन्तरम्-ः १३-२९, ३३तमश्लोकयोः प्रदर्शितम् 'भूतप्रकृतिमोक्षम्' इत्यस्य भाष्यम्-भूतानां प्रकृतिः अविद्यालक्षणा अव्यक्ताख्या ; तस्या भूतप्रकृतेः, मोक्षणम् अभावगमनम् च -इति ॥]

## आत्मनः प्रकृतिगुणासंस्पृष्टत्वम् -

८७. येन-ज्ञानचक्षुषा क्षेत्रक्षेत्रज्ञवैलक्षण्यम्, भूतप्रकृतिमोक्षणं च ज्ञायते तज्ज्ञानं किंलँक्षणम् इत्येतद् विवेचनीयम् । तत्र प्रकृतिरेव कर्त्री आत्मा त्वकर्ता-इति तावत् क्वचिद् दर्शितमत्र ॥

(१) प्रकृत्यैव च कर्माणि क्रियमाणानि सर्वशः ।
यः पश्यति तथाऽऽत्मानमकर्तारं स पश्यति ॥ १३-२९.

अत्र अकर्तृत्वविशेषणादानस्य फलं पुरस्ताद् विम्रक्ष्यामः । एतावत्त्विहावधेयम् यत् तेन क्रियाशून्यं तूष्णीमवस्थानं न विवक्षितम्, यतस्तूष्णीमवस्थानमपि कर्मैव, तस्याप्यनात्मधर्मत्वं चेति । यत आह भगवान् -

(२) कर्मण्यकर्म यः पश्येदकर्मणि च कर्म यः ।
स बुद्धिमान् मनुष्येषु स युक्तः कृत्स्नकर्मकृत् ॥ ४-१८.

इति । अत्र भाष्यम् -

(1) अत्र च कर्म कर्मैव सत् कार्यकरणाश्रयम्, कर्मरहिते अविक्रिये आत्मनि सर्वैरध्यस्तम् ; यतः पण्डितोऽपि 'अहं करोमि' इति मन्यते । अतः आत्मसमवेततया सर्वलोकप्रसिद्धे कर्मणि नदी-कूलस्थेष्विव वृक्षेषु, गतिप्रातिलोम्येन अकर्म कर्माभावं यथाभूतं गत्यभावमिव वृक्षेषु, यः पश्येत् ; अकर्मणि च कार्यकरणव्यापारोपरमे

कर्मवदात्मन्यध्यारोपिते 'तूष्णीम् अकुर्वन् सुखमासे' इत्यहङ्काराभिसन्धिहेतुत्वात् तस्मिन् अकर्मणि च कर्म यः पश्येत्। य एवं कर्माकर्मविभागज्ञः स बुद्धिमान् पण्डितः मनुष्येषु, स युक्तो योगी कृत्स्नकर्मकृच्च सः। अशुभान्मोक्षितः कृतकृत्यो भवतीत्यर्थः ॥ भा॰ पा॰ ६८.

(३) नान्यं गुणेभ्यः कर्तारं यदा द्रष्टाऽनुपश्यति।
गुणेभ्यश्च परं वेत्ति मद्भावं सोऽधिगच्छति ॥ १४-१९

अत्र गुणेभ्यः परम् आत्मानं विदितवतो वेदनमात्रेण ब्रह्मात्मभावावगमोक्तेः, प्रकृतिपुरुषसंयोगो मिथ्याज्ञानमात्रकृतः, पुरुषस्तु स्वयं परमात्मैव—इत्यर्थो विवक्षित इति गम्यते। तत्र गुणेभ्यः परत्वं द्विविधम् – (1) देहेन्द्रियादिरूपेण परिणतैस्तैः सर्वथा असंपृक्तत्वम्, नित्यासङ्गचिद्रूपत्वात् (2) तेभ्यः सर्वेभ्योऽपि सौक्ष्म्यव्यापित्वप्रत्यगात्मत्वैर्निरतिशयस्वभावत्वं च। तथा ह्याह भाष्यकृत् –

(2) नान्यं कार्यकरणविषयाकारपरिणतेभ्यो गुणेभ्यः कर्तारं अन्यं यदा द्रष्टा विद्वान् सन् नानुपश्यति, 'गुणा एव सर्वावस्थाः सर्वकर्मणां कर्तारः' इत्येवं पश्यति ; गुणेभ्यश्च परं गुणव्यापारसाक्षिभूतं वेत्ति – मद्भावं मम भावं स द्रष्टा अधिगच्छति ॥ भा॰ पा॰ २२३.

[अत्र 'साक्षिभूतम्' इत्यनेन गुणव्यापारासंस्पृष्टत्वमुक्तम् ॥]

(3) इन्द्रियाणि श्रोत्रादीनि पञ्च देहं स्थूलं बाह्यं परिच्छिन्नं च अपेक्ष्य सौक्ष्म्यान्तरस्थितत्वव्यापित्वाद्यपेक्षया पराणि प्रकृष्टानि आहुः पण्डिताः। तथा इन्द्रियेभ्यः परं मनः सङ्कल्पविकल्पात्मकम्। तथा मनसस्तु परा बुद्धिः, निश्चयात्मिका। तथा यः सर्वदृश्येभ्यो बुद्ध्यन्तेभ्यो ऽभ्यन्तरः – यं देहिनमिन्द्रियादिभिराश्रयैर्युक्तः कामो ज्ञानावरणद्वारेण मोहयतीत्युक्तम् – बुद्धेः परतस्तु सः, स बुद्धेर्द्रष्टा पर आत्मा ॥

गी॰ भा॰ ३-४२ ; पा॰ ६०.

प्रकृतिपुरुषयोः संसारहेतुत्वम् –

८८. यथोक्तप्रकारेण प्रकृतिपुरुषविवेकलक्षणसम्यग्ज्ञानमात्राद् ब्रह्मात्मप्राप्तिकथनात् तदविवेककृतमेव संसारित्वमित्यर्थात् सिध्यति । तत्र प्रकृतिः कथं संसारकारणम्, पुरुषश्च कथम् ? – इत्याकाङ्क्षायाम् प्रकृतिः कार्यकरणरूपेण परिणामात्, पुरुषस्तु प्रकृतिधर्मभूतसुखदुःखादेः स्वात्मसंबद्धत्वेनोपलम्भात् संसारहेतुरिति विस्पष्टमाह भगवान् –

(१) कार्यकरणकर्तृत्वे हेतुः प्रकृतिरुच्यते ।
पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते ॥ १३–२०.

['कार्यकारण' इत्यपि पाठोऽस्ति । सांख्योक्तानां सप्तानां प्रकृतिविकृतीनां कारणशब्देन, षोडशकस्य च विकारस्य कार्यशब्देन ग्रहणेऽपि नार्थान्तरत्वं श्लोकस्य । प्रकृतेः शरीरेन्द्रियरूपेण परिणामो हि सर्वथापि विवक्षितः ॥]

(२) पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान् गुणान् ।
कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु ॥ १३–२१.

भाष्यम् – पुरुषो भोक्ता प्रकृतिस्थः प्रकृतौ अविद्यालक्षणायां कार्यकरणरूपेण परिणतायां स्थितः प्रकृतिस्थः । प्रकृतिम् आत्मत्वेन गतः इत्येतत्, हि यस्मात्, तस्मात् भुङ्क्ते उपलभते इत्यर्थः । प्रकृतिजान् प्रकृतितो जातान् सुखदुःखमोहाकाराभिव्यक्तान् गुणान् 'सुखी', 'दुःखी', 'मूढः', 'पण्डितोऽहम्' इत्येवम् । सत्यामपि अविद्यायाम् सुखदुःखमोहेषु गुणेषु भुज्यमानेषु यः सङ्गः आत्मभावः संसारस्य स प्रधानं कारणं जन्मनः । ........ । एतदुक्तं भवति – प्रकृतिस्थत्वाख्या अविद्या, गुणेषु च सङ्गः कामः– संसारस्य कारणमिति । तच्च परिवर्जनाय उच्यते । अस्य च निवृत्तिकारणं ज्ञानवैराग्ये ससंन्यासे गीताशास्त्रे प्रसिद्धम् ॥ भा॰ पा॰ २०८, २०९.

वस्तुतस्तु पुरुषः पर एव –

८९. परमार्थदृष्ट्या तु पुरुषाख्यः सद्ब्रह्मैवाद्वितीयः परमात्मा। प्रकृतिस्तत्कृतदेहेन्द्रियविषयसुखदुःखादयश्च मिथ्यैव। सर्वस्यापि जगतः पुरुषेणैव व्याप्तत्वात्, हिमघन इव जलेन। तदाह –

(१) नासतो विद्यते भावो नाभावो विद्यते सतः।
उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः॥ २–१६.
अविनाशि[1] तु तद्विद्धि येन सर्वमिदं ततम्।[2]
विनाशमव्ययस्यास्य न कश्चित् कर्तुमर्हति॥ २–१७.
अन्तवन्त इमे देहा नित्यस्योक्ताः शरीरिणः।
अनाशिनोऽप्रमेयस्य तस्माद् युध्यस्व भारत॥ २–१८.

[सर्वं हि विनश्यद् विकारजातं पुरुषान्तं विनश्यति। पुरुषस्तु स्वतः परतो वा विनाशहेतोरभावादेवाविनाशी। पुरुषादन्यत्वेन विभाव्यमानं सर्वं पुरुषेणैव पूर्णमिति न पुरुषव्यतिरेकेण तस्यास्तित्वम् अवकल्पते – इति श्लोकद्वयार्थः॥]

(२) उपद्रष्टा[3]ऽनुमन्ता च भर्ता भोक्ता महेश्वरः।
परमात्मेति[4] चाप्युक्तो देहेऽस्मिन् पुरुषः परः॥ १३–२२.

(1) उपद्रष्टा समीपस्थः सन् द्रष्टा स्वयम् अव्यापृतः। यथा ऋत्विग्यजमानेषु यज्ञकर्मव्यापृतेषु तटस्थोऽन्यः, अव्यापृतः, यज्ञविद्याकुशलः, ऋत्विग्यजमानव्यापारगुणदोषाणाम् ईक्षिता, तद्वत् कार्यकरणव्यापारेषु अव्यापृतोऽन्यस्तद्विलक्षणः, तेषां कार्यकरणानां सव्यापाराणां

---

1. अविनाशी वा अरेऽयमात्माऽनुच्छित्तिधर्मा॥ बृ. ४–५–१४.
2. तेनेदं पूर्णं पुरुषेण सर्वम्॥ श्वे. ३–९.
3. यत् साक्षादपरोक्षाद् ब्रह्म य आत्मा सर्वान्तरः ........ न दृष्टेर्द्रष्टारं पश्येः॥ बृ. ३–४–२.
4. 'तत्सत्यं स आत्मा' छां. ६–८–७.

सामीप्येन द्रष्टा उपद्रष्टा । अथवा, देहचक्षुर्मनोबुद्ध्यात्मानो द्रष्टारः, तेषां बाह्यो द्रष्टा देहः, तत आरभ्यान्तरतमश्च प्रत्यक् समीपे आत्मा द्रष्टा । यतः परोऽन्तरतमो नास्ति द्रष्टा, सोऽतिशयसामीप्येन द्रष्टृत्वात् उपद्रष्टा स्यात् । यज्ञोपद्रष्टृवद् वा सर्वविषयीकरणात् उपद्रष्टा । अनुमन्ता च । अनुमोदनम् अनुमननम् कुर्वत्सु तत्क्रियासु परितोषः ; तत्कर्ता अनुमन्ता च । अथवा अनुमन्ता कार्यकरणप्रवृत्तिषु स्वयं अप्रवृत्तोऽपि प्रवृत्त इव तदनुकूलो विभाव्यते तेनानुमन्ता । अथवा प्रवृत्तान् स्वव्यापारेषु तत्साक्षिभूतः कदाचिदपि न निवारयति–इत्यनुमन्ता । भर्ता । भरणं नाम देहेन्द्रियमनोबुद्धीनां संहतानां चैतन्यात्मपारार्थ्येन निमित्तभूतेन चैतन्याभासानां यत् स्वरूपधारणम्, तत् चैतन्यात्मकृतमेव इति भर्ता आत्मा उच्यते । भोक्ता । अग्न्युष्णवत् नित्यचैतन्यस्वरूपेण बुद्धेः सुखदुःखमोहात्मकाः प्रत्ययाः सर्वविषयविषयाः, चैतन्यात्मग्रस्ता इव जायमाना विभक्ता विभाव्यन्ते इति भोक्ता आत्मा उच्यते । महेश्वरः । सर्वात्मत्वात्, स्वतन्त्रत्वाच्च महान् ईश्वरश्च – इति महेश्वरः । परमात्मा । देहादीनां बुद्ध्यन्तानां प्रत्यगात्मत्वेन कल्पितानामविद्यया, परम उपद्रष्टृत्वादिलक्षणः आत्मा–इति परमात्मा सः । अतः 'परमात्मा' इत्यनेन शब्देन चाप्युक्तः कथितः श्रुतौ । क्वासौ ? अस्मिन् देहे पुरुषः, परः अव्यक्तात् । 'उत्तमः पुरुषस्त्वन्यः' (१५–१७) इति यो वक्ष्यमाणः, 'क्षेत्रज्ञं चापि मां विद्धि' (गी. १३–२) इत्युपन्यस्तः, व्याख्यायोपसंहृतश्च ॥

भा. पा. २०९, २१०.

## क्षेत्रज्ञस्य परमार्थस्वरूपम् –

९०. तदेवं पुरुषस्य चैतन्यस्वरूपेण सर्वव्यापकत्वात्, तद्विभाजकहेतोरभावाच्च अद्वितीयत्वम् ; अप्रमेयत्वात्, शब्दप्रवृत्तिनिमित्तजात्याद्यभावाच्च वाङ्मनसाविषयत्वमिति तस्य सदसदादिशब्दगोचरत्वमपि नास्ति वस्तुतः । तस्मात्, वेदोक्तमद्वितीयं ब्रह्मैव

व्यवहारे भिन्नभिन्नक्षेत्रज्ञापराभिधानजीवात्मतया विभाव्यत इति सिद्धम् । एतच्च गीतावाक्यैरेव दर्शयिष्यामः ॥

तत्र क्षेत्रक्षेत्रज्ञशब्दार्थं तावदाह तत्स्वरूपविवेचनार्थम् –

(१) इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते ।
एतद् यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः ॥[1] १३-१.

भाष्यम् – एतच्छरीरं क्षेत्रं यो वेत्ति विजानाति आपादतलमस्तकं ज्ञानेन विषयीकरोति स्वाभाविकेन औपदेशिकेन वा वेदनेन विषयीकरोति विभागशः, तं वेदितारं प्राहुः कथयन्ति क्षेत्रज्ञ इति ॥

भा. पा. १८९.

क्षेत्रक्षेत्रज्ञयोः विषयविषयिभावसंबन्धमाह –

(२) क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत ।[2]
क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत्तज्ज्ञानं मतं मम ॥ १३-२.

क्षेत्रक्षेत्रज्ञयोर्विवरणं श्रुतिप्रमाणकमित्याह –

(३) तत् क्षेत्रं यच्च यादृक् च यद्विकारि यतश्च यत् ।
स च यो यत्प्रभावश्च तत्समासेन मे शृणु ॥ १३-३.

ऋषिभिर्बहुधा गीतं छन्दोभिर्विविधैः पृथक् ।
ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैः ॥ १३-४.

---

1. 'तावेतौ सत्त्वक्षेत्रज्ञौ न ह वा एवंविदि किञ्चन रज आध्वंसते' ॥ (पैङ्गि.)

2. 'एको देवः सर्वभूतेषु गूढः' (श्वे. ६-११); 'तत्त्वमसि' (छां. ६-८-७); 'अहं ब्रह्मास्मि' (बृ. १-४-१०); 'अयमात्मा ब्रह्म' (बृ. २-५-१९) ॥

अत्र क्षेत्रभेदजातमाह –

(४) महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च ।
इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचराः ॥[1] १३–५.
इच्छा द्वेषः सुखं दुःखं सङ्घातश्चेतना धृतिः ।[2]
एतत् क्षेत्रं समासेन सविकारमुदाहृतम् ॥ १३–६.

[अत्र यथैवाव्यक्तादीन्द्रियार्थपर्यन्तानि सांख्याभिमतपञ्चविंशतितत्त्वानि, तथैव वैशेषिकैर्लौकिकैश्च आत्मधर्मत्वेन विभाव्यमानानामपि क्षेत्रविशेषकुक्षौ निक्षेपात् क्षेत्रज्ञस्य यज्ज्ञानम् न तद् वृत्तिरूपमित्युक्तं भवति ॥]

उक्तं क्षेत्रं सविकारम् । एतेन तत् क्षेत्रं यच्च यादृक्च यद्विकारि यतश्च यत्' इति श्लोकार्धो व्याख्यातः । अथेदानीं 'स च यो यत्प्रभावश्च' इत्येतद् वक्तव्यम् । यद्यपि 'उपद्रष्टाऽनुमन्ता च' (१३–२२) इति श्लोकविवरणेन एतदप्युक्तप्रायम्, तथापि 'क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत' इत्येतत् कात्स्न्र्येन न निर्धारितं भवति । तत्र 'देहेऽस्मिन् पुरुषः परः' इति एकस्यैव देहस्य परामर्शाद् तस्यैव पुरुषस्य ब्रह्मणा वासुदेवेनैकत्वम् एवं विवृतमिहानुसंधातव्यम् ॥

---

1. अनात्मभूतं क्षेत्रमनुक्रान्तं प्रश्नोपनिषदि सुषुप्तात्मना सर्वमेकीभवतीति प्रतिपादनप्रसङ्गेन–'पृथिवी च पृथिवीमात्रा चापश्चापोमात्रा च तेजश्च तेजोमात्रा च वायुश्च वायुमात्रा चाकाशश्चाकाशमात्रा च चक्षुश्च द्रष्टव्यं च श्रोत्रं च श्रोतव्यं च घ्राणं च घ्रातव्यं च रसश्च रसयितव्यं च त्वक्च स्पर्शयितव्यं च वाक्च वक्तव्यं च हस्तौ चादातव्यं चोपस्थश्चानन्दयितव्यं च पायुश्च विसर्जयितव्यं च पादौ च गन्तव्यं च मनश्च मन्तव्यं च बुद्धिश्च बोद्धव्यं चाहङ्कारश्चाहङ्कर्तव्यं च चित्तं च चेतयितव्यं च तेजश्च विद्योतयितव्यं च प्राणश्च विधारयितव्यं च ॥ प्र. ४–८.

2. 'कामः सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतद् सर्वं मन एव' ॥ बृ. १–५–३. यदेतद्धृदयं मनश्चैतत् संज्ञानमाज्ञानं विज्ञानं प्रज्ञानं मेधा दृष्टिर्धृतिर्मतिर्मनीषा जूतिः स्मृतिः सङ्कल्पः क्रतुरसुः कामो वश इति ॥ ऐ. ३-२.

(५) ज्ञेयं यत्तत् प्रवक्ष्यामि यज्ज्ञात्वाऽमृतमश्नुते ।
अनादिमत् परं ब्रह्म न सत्तन्नासदुच्यते ॥[1] १३-१२.

अत्र भाष्यं ज्ञेयस्य सदसदादिशब्दवाच्यत्वे उपपत्तिप्रदर्शकम् अनुसन्धेयम् –

"सर्वो हि शब्दोऽर्थप्रकाशनाय प्रयुक्तः, श्रूयमाणश्च श्रोतृभिः, जातिक्रियागुणसंबन्धद्वारेण सङ्केतग्रहणसव्यपेक्षोऽर्थं प्रत्याययति, नान्यथा अदृष्टत्वात् । .... न तु ब्रह्म जात्यादिमत् "

इत्यादि ॥

सर्वतः पाणिपादं तत् सर्वतोऽक्षिशिरोमुखम् ।
सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥ १३-१३.
सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम् ।
असक्तं सर्वभृच्चैव निर्गुणं गुणभोक्तृ च ॥[2] १३-१४.
बहिरन्तश्च भूतानामचरं चरमेव च ।
सूक्ष्मत्वात् तदविज्ञेयं दूरस्थं चान्तिके च तत् ॥[3] १३-१५.
अविभक्तं च भूतेषु विभक्तमिव च स्थितम् ।
भूतभर्तृ च तज्ज्ञेयं ग्रसिष्णु प्रभविष्णु च ॥ १३-१६.
ज्योतिषामपि तज्ज्योतिस्[4]तमसः परमुच्यते ॥ १३-१७.

---

1. अथात आदेशो नेति नेति न ह्येतस्मादिति नेत्यन्यत्परमस्ति ॥ बृ. २-३-६
अन्यदेव तद्विदितादथो अविदितादधि ॥ के. १-४.

2. सर्वतः पाणिपादं तत् सर्वतोऽक्षिशिरोमुखम् ।
सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥
सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम् ।
सर्वस्य प्रभुमीशानं सर्वस्य शरणं बृहत् ॥* श्वे. ३-१६, १७.
* [सुहृत् इति पा.]

3. तद्दूरे तद्वन्तिके ॥ ई. ५.

4. तद्देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम् ॥ बृ. ४-४-१६.

अत्र क्षेत्रज्ञपरमार्थस्वरूपस्य ब्रह्मणो निर्विशेषत्वं सदसदादिशब्दागोचरत्वकथनेन विज्ञाप्य तदनु तस्य शून्यत्वशङ्कापनयनार्थमध्यारोपापवादन्यायमनुसृत्यापि तत्स्वरूपं निर्दिष्टम् । अत्र भाष्यम् –

(2) सच्छब्दप्रत्ययाविषयत्वात् असत्त्वाशङ्कायां ज्ञेयस्य सर्वप्राणिकरणोपाधिद्वारेण तदस्तित्वं प्रतिपादयन् तदाशङ्कानिवृत्त्यर्थमाह – सर्वतःपाणिपादम् । सर्वतः पाणयः पादाश्च अस्य इति सर्वतःपाणिपादं तत् ज्ञेयम् । सर्वप्राणिकरणोपाधिभिः क्षेत्रज्ञास्तित्वं विभाव्यते । क्षेत्रज्ञश्च क्षेत्रोपाधित उच्यते । क्षेत्रं च पाणिपादादिभिरनेकधा भिन्नम् । क्षेत्रोपाधिभेदकृतं विशेषजातं मिथ्यैव क्षेत्रज्ञस्येति तदपनयनेन ज्ञेयत्वमुक्तं 'न सत्तन्नासदुच्यते' इति । उपाधिकृतं मिथ्यारूपमपि अस्तित्वाधिगमाय ज्ञेयधर्मवत् परिकल्प्योच्यते 'सर्वतःपाणिपादम्' इत्यादि । तथा हि संप्रदायविदां वचनम् 'अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्च्यते' इति । सर्वत्र सर्वदेहावयवत्वेन गम्यमानाः पाणिपादादयो ज्ञेयशक्तिसद्भावनिमित्तस्वकार्या इति ज्ञेयसद्भावे लिङ्गानि ज्ञेयस्य इत्युपचारत उच्यन्ते । तथा व्याख्येयमन्यत् ॥ भा॰ १३–१३, पा॰ २०३, २०४.

श्लोकान्तराणां भाष्यं खण्डशः प्रदर्श्यते । अधिकं तु मूलत एवाधिगन्तव्यम् ॥

(3) असक्तं सर्वसंश्लेषवर्जितम् । यद्यप्येवं तथापि सर्वभृच्चैव । सदास्पदं हि सर्वम्, सर्वत्र सद्बुद्ध्यनुगमात्; न हि मृगतृष्णिकादयोऽपि निरास्पदा भवन्ति । अतः सर्वभृत् सर्वं बिभर्तीति ॥ भा॰ १३–१४, पा॰ २०४–२०५.

(4) गुणभोक्तृ च । गुणानां सत्त्वरजस्तमसां शब्दादिद्वारेण सुखदुःखमोहाकारपरिणतानां भोक्तृ च उपलब्धृ च ॥ १३–१४, पा॰ २०५.

(5) अचरं चरमेव च । यच्चराचरं देहाभासमपि तदेव ज्ञेयम् । यथा रज्जुसर्पाभासः ॥ भा. १३-१५, पा. २०५.

(6) उत्पत्तिकाले प्रभविष्णु च प्रभवनशीलम् । यथा रज्ज्वादिः सर्पादेर्मिथ्याकल्पितस्य ॥ भा. १३-१६, पा. २०५, २०६.

(7) ज्योतिषाम् आदित्यादीनामपि तत् ज्ञेयं ज्योतिः । आत्मचैतन्यज्योतिषा इद्धानि हि आदित्यादीनि ज्योतींषि दीप्यन्ते ॥ भा. १३-१७, पा. २०६.

## आत्मस्वरूपभूते ज्ञानसुखे –

९१. 'ज्योतिषामपि तज्ज्योतिः', 'उपद्रष्टा'– इति च विशेषणाभ्याम् आत्मनः स्वरूपभूतमेव क्षेत्रज्ञस्य ज्ञानं नाम येन स सर्वं क्षेत्रं प्रकाशयतीत्युक्तं भवति । एवं सुखमप्यात्मनः स्वरूपभूतमेव न क्षेत्रधर्मः । तदेतत् कण्ठरवेणैवोक्तमत्र –

(१) यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः ।
क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत ॥[1] १३-३३.

[ अत्र महाभूतादिधृत्यन्तं सर्वं क्षेत्रमित्येवोक्तम् । तत्र 'चेतना'ऽपि पठ्यते क्षेत्रभेदत्वेन । तदपि प्रकाशयतीत्युक्त्या गम्यते चेतनायाः सकाशात् आत्मनश्चैतन्यप्रकाशोऽन्य एवेति । भाष्यं चात्रानुसन्धेयम् – 'रविदृष्टान्तोऽत्र आत्मन उभयार्थोऽपि भवति रविवत् सर्वक्षेत्रेष्वेक आत्मा अलेपकश्चेति ॥ ]

(२) तत्र सत्त्वं निर्मलत्वात् प्रकाशकमनामयम् ।
सुखसङ्गेन बध्नाति ज्ञानसङ्गेन चानघ ॥ १४-६.

[अत्रापि ज्ञानसुखयोः सत्त्वधर्मत्वेन बन्धकत्वोक्तेः, आत्मज्ञानसुखे तद्विलक्षणे इति गम्यते । तथा हि भाष्यम् – 'अविद्ययैव स्वकीयधर्मभूतया विषयविषय्य-

1. किञ्ज्योतिरेवायं पुरुष इत्यात्मैवास्य ज्योतिर्भवतीति ॥ बृ. ४-३-६.

विवेकलक्षणया अस्वात्मभूते सुखे सञ्जयतीव । आसक्तमिव करोति, असङ्गं सक्तमिव करोति, असुखिनम् सुखिनमिव । तथा ज्ञानसङ्गेन च ज्ञानमिति सुखसाहचर्यात् क्षेत्रस्यैव विषयस्य अन्तःकरणस्य धर्मो नात्मनः । आत्मधर्मत्वे सङ्गानुपपत्तेर्बन्धानुपपत्तेश्च । सुखे इव ज्ञानादौ सङ्गो मन्तव्यः ' इति । अत्र इवशब्दात् बन्धकालेऽपि वस्तुतः सङ्गो नास्त्येवेति भावोऽनुसंधेयः ॥ ]

(३) प्रशान्तमनसं ह्येनं योगिनं सुखमुत्तमम् ।
उपैति शान्तरजसं ब्रह्मभूतमकल्मषम् ॥ ६-२७.
युञ्जन्नेवं सदाऽऽत्मानं योगी विगतकल्मषः ।
सुखेन ब्रह्मसंस्पर्शमत्यन्तं सुखमश्नुते ॥ ६-२८.

[ इहाऽऽत्मन्येव प्रशान्तमनसं सुखमुपैति, ब्रह्मसंस्पर्शं सुखम् – इति चोक्तेः क्षेत्रधर्मादन्यदेवेदं स्वरूपभूतं सुखमात्मनः–इति विज्ञायते ॥ ]

## सर्वथापि क्षेत्रधर्मकर्मासंस्पृष्टः क्षेत्रज्ञः –

९२. आत्मनः सर्वोपाधिरहितत्वात्, निर्विशेषब्रह्माभिन्नत्वाच्च सर्वथापि प्रकृतिधर्मासंपृक्तत्वमेव स्वरूपम् इति गीताशास्त्रार्थः ॥

(१) प्रकृत्यैव च कर्माणि क्रियमाणानि सर्वशः ।
यः पश्यति तथाऽऽत्मानमकर्तारं स पश्यति ॥[1] १३-२९.

अत्र 'प्रकृत्यैव' इत्यवधारणात् पुरुषो व्यावर्त्यते, न तु प्रकृतिः 'कर्त्र्येव' इति निर्भरेणोच्यते । 'सर्वेन्द्रियविवर्जितम्' इत्यात्मनः सर्वविधकर्मसाधनस्यापि प्रतिषेधात् । 'अचरं चरमेव च' (१३-१५) इति व्यवहारे कर्तृत्वसाधनस्य सर्वस्यापि ज्ञेयमात्रत्वोक्तेश्च । तस्मात् सर्वशः क्रियमाणानीवावभासमानानि कर्माणि प्रकृत्याश्रितान्येव – इत्यर्थोऽवसेयः । एवम् 'अकर्तारम्' इति कर्तृत्वमात्रनिषेधपरं

1. अनश्नन्न्योऽभिचाकशीत्यनश्नन्न्योऽभिपश्यति ज्ञः ॥ (पैङ्गि·)

विशेषणम् इत्यपि न भ्रमितव्यम् । यत्कारणम् आत्मनः कर्तृत्वम् अकर्तृत्वं वा नेह प्रसक्तम्, येन तदेव विशिष्य निषिध्येत 'समं सर्वेषु भूतेषु' इति सर्वत्र स्थितस्य निर्विशेषत्वमेव हि प्रशंसितुमुपात्तमत्र । तथा हि भाष्यकृता संबन्धो दर्श्यतेऽत्र –

(1) सर्वभूतस्थमीश्वरं समं पश्यन् न हिनस्त्यात्मनाऽऽत्मानम् इत्युक्तम् । तदनुपपन्नम् । स्वगुणकर्मवैलक्षण्यभेदभिन्नेष्वात्मसु – इत्येतदाशङ्क्याऽऽह ॥ भा० पा० २१५.

एतदनुगुणमेव च भाष्यस्थं व्याख्यानमपि –

(2) तथा आत्मानं क्षेत्रज्ञं अकर्तारं सर्वोपाधिविवर्जितम्, स पश्यति । स परमार्थदर्शी इत्यभिप्रायः । निर्गुणस्य, अकर्तुः, निर्विशेषस्य आकाशस्येव भेदे प्रमाणानुपपत्तिः–इत्यर्थः ॥ भा० पा० २१५.

## क्षेत्रक्षेत्रज्ञज्ञानस्य स्वरूपम् –

९३. अथ क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यदुक्तं तत्कथंलक्षणम् ? – इति विवेक्तव्यम् । क्षेत्रक्षेत्रज्ञयोर्ज्ञानमेव परमार्थज्ञानम्, तयोरन्तरं ज्ञात्वैव विमुच्यन्ते इति हि वक्ति भगवान्

(१) क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत्तज्ज्ञानं मतं मम ॥ १३-२.

(२) क्षेत्रक्षेत्रज्ञयोरेवमन्तरं ज्ञानचक्षुषा ।
भूतप्रकृतिमोक्षं च ये विदुर्यान्ति ते परम् ॥[1] १३-३४.

इति च ज्ञानं सफलोक्ति प्रशंसन् । न ह्यत्र आत्मस्वरूपभूतं ज्ञानं विवक्षितम्, न हि क्षेत्रक्षेत्रज्ञयोरन्तरं क्षेत्रज्ञस्वरूपभूतं ज्ञानं वेदितुं

1. ब्रह्मविदाप्नोति परम् ॥ तै० २-१.

समर्थमित्युक्तिराञ्जसी स्यात् । कर्मकर्तृत्वविरोधात् । न च तत् क्षेत्रान्तर्गतं ज्ञानम्, तस्य ज्ञेयत्वेनैव विनियुक्तेः । भाष्यं चात्र –

(१) क्षेत्रक्षेत्रज्ञयोर्यथाव्याख्यातयोः, एवं यथाप्रदर्शितप्रकारेण अन्तरम् इतरेतरवैलक्षण्यविशेषं ज्ञानचक्षुषा शास्त्राचार्यप्रसादोपदेशजनितम् आत्मप्रत्ययिकं ज्ञानं चक्षुः ; तेन ज्ञानचक्षुषा । .... ये विदुर्विजानन्ति यान्ति गच्छन्ति ते परं परमार्थतत्त्वं ब्रह्म, न पुनर्देहमाददते इत्यर्थः ॥ आ॰ पा॰ २१७

इति । अत्रोच्यते, नेदं प्रकृतिविशेषलक्षणं ज्ञानम्, नापि पुरुषस्वरूपभूतम् ; किं तु शास्त्राचार्योपदेशप्रमाणजनिता अवगतिरेव । 'आत्मप्रत्ययिकं ज्ञानम्' इति भाष्यात् । एवं हि सति ज्ञानसाधनगणोपदेशोऽपि सार्थको भवति –

(२) अमानित्वमदम्भित्वमहिंसा क्षान्तिरार्जवम् ।
आचार्योपासनं शौचं स्थैर्यमात्मविनिग्रहः ॥ १३-७.

इन्द्रियार्थेषु वैराग्यमनहङ्कार एव च ।
जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम् ॥ १३-८.

असक्तिरनभिष्वङ्गः पुत्रदारगृहादिषु ।
नित्यं च समचित्तत्वमिष्टानिष्टोपपत्तिषु ॥ १३-९.

मयि चानन्ययोगेन भक्तिरव्यभिचारिणी ।
विविक्तदेशसेवित्वमरतिर्जनसंसदि ॥ १३-१०.

अध्यात्मज्ञाननित्यत्वं तत्त्वज्ञानार्थदर्शनम् ।
एतज्ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा ॥[1] १३-११

---

1. नाविरतो दुश्चरितान्नाशान्तो नासमाहितः ।
नाशान्तमानसो वापि प्रज्ञानेनैनमाप्नुयात् ॥ का॰ १-२-२४.

न हि प्राकृतिकम् इन्द्रियजन्यं मानसज्ञानं वा अमानित्वाद्यपेक्षम् । तद्विपरीतधर्मवतामपि निसर्गादेव ज्ञानजन्मदर्शनात् । किञ्च लोके शिल्पादिशास्त्रज्ञानस्य वेदे चाग्निहोत्रादिज्ञानस्य च तत्तच्छास्त्राचार्य-लभ्यत्वं दृष्टमेवेति नाप्राप्तमिवाचार्योपासनं ज्ञानार्थत्वेनोपदिश्यमानम् अर्थवत् स्यात् यदि केवलबुद्धिजन्यमेव ज्ञानमिह विवक्षितं स्यात् । न चेन्द्रियार्थेषु वैराग्यम् तत्रोपकारि ; न हि यदेव यतो निवृत्तिकारणं तदेव तत्र प्रवृत्त्या तज्ज्ञानसाधनं भवेत् । एवं बाह्यविषयेष्वौदासीन्यं तत्र वैतृष्ण्यं च शिष्ट्वा अध्यात्मयोगपरत्वमुपदिश्य अध्यात्मज्ञाननित्यत्वं तत्त्वज्ञानार्थदर्शनं चेति द्वे साधने उपदिशति । तत्र भाष्यम् —

(2) 'अध्यात्मज्ञाननित्यत्वम्' । आत्मादिविषयं ज्ञानम् अध्यात्म-ज्ञानम् । तस्मिन् नित्यभावो नित्यत्वम् ॥ भा॰ १३-११, पा॰ २०१.

(3) अमानित्वादीनां ज्ञानसाधनानां भावनापरिपाकनिमित्तं तत्त्व-ज्ञानम् । तस्यार्थः मोक्षः संसारोपरमः । तस्य आलोचनं तत्त्वज्ञानार्थ-दर्शनम् । तत्त्वज्ञानफलालोचने हि तत्साधनानुष्ठाने प्रवृत्तिः स्यादिति ॥ भा॰ १३-११, पा॰ २०१.

इति च । एतदेव च विस्पष्टतरमाह भाष्यकृत् —

(4) शास्त्राचार्योपदेशेन, ज्ञानोत्पत्तिपरिपाकहेतुं सहकारिकारणं बुद्धिविशुद्ध्यादि अमानित्वादि च - अपेक्ष्य जनितस्य क्षेत्रज्ञपरमात्मै-कत्वज्ञानस्य, कर्तृत्वादिकारकभेदबुद्धिनिबन्धनसर्वकर्मसंन्याससहितस्य स्वात्मानुभवनिश्चयरूपेण यदवस्थानम् सा परा ज्ञाननिष्ठा – इत्युच्यते ॥ भा॰ पा॰ २८४.

एवं च प्रत्यक्षादिप्रमाणेष्विव या प्रमितिर्जायते शास्त्रप्रमाणेन केवलात्मावगतिरूपा, सैवात्र क्षेत्रक्षेत्रज्ञविवेकलक्षणज्ञानशब्दवाच्येत्यव-गम्यते ॥

ज्ञानमज्ञाननिवर्तनेन सद्योमुक्तिप्रदम् –

९४. इदं चात्मज्ञानं मिथ्याज्ञाननिवर्तनमात्रेण सद्यः फलदातृ, न तु कालान्तरे क्रममोक्षदायि भावनात्मकोपासनवदिति तत्र तत्र दर्शयति भगवान् –

(१) यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति ।
तस्याहं न प्रणश्यामि स च मे न प्रणश्यति ॥ ६-३०.
सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः ।
सर्वथा वर्तमानोऽपि स योगी मयि वर्तते ॥ ६-३१.

भाष्यम्-(1) तस्यैवम् आत्मैकत्वदर्शिनः, अहमीश्वरो न प्रणश्यामि, न परोक्षतां गमिष्यामि, स च मे न प्रणश्यति स च विद्वान् मम वासुदेवस्य न प्रणश्यति, न परोक्षो भवति । तस्य च मम चैकात्मकत्वात् ॥ भा. ६-३०, पा. ११०.

[भगवता एकत्वमेव भगवत्प्राप्तिलक्षणा मुक्तिर्ज्ञाननान्तरीयकीत्युक्तं भवति ॥]

(2) सर्वथा सर्वप्रकारैर्वर्तमानोऽपि सम्यग्दर्शी योगी मयि वैष्णवे परमे पदे वर्तते । नित्यमुक्त एव सः, न मोक्षं प्रति केनचित् प्रतिबध्यत इत्यर्थः ॥ भा. ६-३१, पा. ११०.

(२) इदं तु ते गुह्यतमं प्रवक्ष्याम्यनसूयवे ।
ज्ञानं विज्ञानसहितं यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ॥ ९-१.

भाष्यम्-(3) ज्ञानं किंविशिष्टम् ? विज्ञानसहितमनुभवयुक्तम् । यज्ज्ञानं ज्ञात्वा प्राप्य मोक्ष्यसे अशुभात् संसारबन्धनात् ॥ भा.पा. १३७.

(३) इहैव तैर्जितः सर्गो येषां साम्ये स्थितं मनः ॥ ५-१९.

भाष्यम्-(4) इहैवं जीवद्भिरेव तैः समदर्शिभिः पण्डितैः जितो वशीकृतः सर्गः, जन्म, येषां साम्ये सर्वभूतेषु ब्रह्मणि समभावे स्थितं निश्चलीभूतं मनः ॥ भा. ५-१९, पा. ९३.

(४) अभितो ब्रह्मनिर्वाणं वर्तते विदितात्मनाम् ॥[1] ५-२६.

भाष्यम्-(5) अभितः उभयतः - जीवतां मृतानां च - ब्रह्मनिर्वाणं मोक्षो वर्तते विदितात्मनाम्। विदितो ज्ञातः आत्मा येषां ते विदितात्मानः; तेषां विदितात्मनाम्। सम्यग्दर्शिनाम् इत्यर्थः ॥ भा. पा. ९६.

अत्र ज्ञाननाश्याज्ञानसतत्त्वं विमर्शमर्हति । यतो ज्ञानपदार्थे इव अज्ञानपदार्थेऽपि वादिनो विप्रतिपन्नाः । तत्र कतिचित् श्लोकानुदाहरिष्यामः -

(५) न कर्तृत्वं न कर्माणि लोकस्य सृजति प्रभुः ।
न कर्मफलसंयोगं स्वभावस्तु प्रवर्तते ॥ ५-१४.

भाष्यम् - स्वभावस्तु स्वो भावः स्वभावः अविद्यालक्षणा प्रकृतिर्माया प्रवर्तते 'दैवी हि' इत्यादिना वक्ष्यमाणा ॥ भा. पा. ९१.

नादत्ते कस्यचित् पापं न चैव सुकृतं विभुः ।
अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः ॥[2] ५-१५.

भाष्यम् - अज्ञानेनावृतं ज्ञानम् विवेकविज्ञानं तेन मुह्यन्ति 'करोमि', 'कारयामि', 'भोक्ष्ये', 'भोजयामि' इत्येवं मोहं गच्छन्ति अविवेकिनः संसारिणो जीवाः जन्तवः ॥ भा. पा. ९१-९२.

अत्राज्ञानं नाम मिथ्याज्ञानं क्षेत्रक्षेत्रज्ञसंयोगशब्दवाच्यम् (१३-२६) अध्यासलक्षणम् । तेनावरणं बहिर्विषयापकृष्टत्वापादनमेव । न तु घनेनादित्याद्याच्छादनमिव तिरोभावनम् । एतदपि कामद्वारा, 'आवृतं

---

1. 'ब्रह्मैव सन् ब्रह्माप्येति' बृ. ४-४-६ ; 'अत्र ब्रह्म समश्नुते' का. २-३-१४.

2. अविद्यायामन्तरे वर्तमानाः स्वयं धीराः पण्डितं मन्यमानाः ।
जङ्घन्यमानाः परियन्ति मूढा अन्धेनैव नीयमाना यथान्धाः ॥
मुं १-२-८.

ज्ञानमेतेन ज्ञानिनो नित्यवैरिणा । कामरूपेण कौन्तेय दुष्पूरेणानलेन च ॥' (३–३९) इत्युक्तेः । न हि मुख्यवृत्त्यैव ज्ञानस्यावरणमज्ञानेन प्रदीपप्रकाशस्येव तमसा इति संभवति । वस्तुतस्तु नित्यमनावरण-ज्ञानशक्तिरेवात्मा स्वयंप्रकाशत्वात्, अज्ञानं प्रत्यपि प्रकाशकत्वादिति ध्येयम् । एवं च अविवेकनिबन्धनमिथ्याध्यासनिमित्तं कर्तृत्वभोक्तृत्वम्, क्षेत्रक्षेत्रज्ञविवेकात्तु नित्याकर्तृत्वाभोक्तृत्वप्रतिपत्तिः–इत्युपपद्यते ॥

अथवा 'अज्ञान'शब्देनात्र मिथ्याज्ञानकारणभूतोऽविवेकः, तज्जं संशयज्ञानं च गृह्येते । तज्जन्यं मिथ्याज्ञानं तु 'मुह्यन्ति' इति मोह-शब्देनोच्यत इति व्याख्येयम् । तथा हि

(६) अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति ॥ ४–४०

इत्यज्ञानसंशयहानस्य श्रद्धालुत्वस्य च ज्ञानोपायत्वेन प्रदर्शनम्,

(७) योगसंन्यस्तकर्माणं ज्ञानसञ्छिन्नसंशयम् ।
आत्मवन्तं न कर्माणि निबध्नन्ति धनञ्जय ॥ ४–४१

इत्यज्ञानसंशययोर्ज्ञाननिवर्त्यत्ववचनं च – उपपन्नं भवति । अज्ञानेन संशयो मिथ्याज्ञानं च जायत इत्यत्र तु –

(८) अ] मेधावी च्छिन्नसंशयः ॥ १८–१०.

इत्यत्रत्यं 'मेधावित्वादेव छिन्नसंशयः, छिन्नः अविद्याकृतः संशयः यस्य' इति भाष्यम् –

1. सोऽविद्याग्रन्थिं विकरतीह सोम्य ॥ मुं॰ २–१–१० ; भिद्यते हृदय-ग्रन्थिश्छिद्यन्ते सर्वसंशयाः ॥ मुं॰ २–२–८.

(आ) तेषामेवानुकम्पार्थमहमज्ञानजं तमः ।
नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता ॥ १०–११.

इति भगवदुक्तिश्च प्रमाणम् ॥

[ 'अज्ञानजम् अविवेकतो जातं मिथ्याप्रत्ययलक्षणं मोहान्धकारं तमः' इति हि भाष्यम् ॥ ]

यद्यप्यविवेकरूपमज्ञानम् अभावरूपम्, तथापि यथा अविविक्ता रज्जुः सर्परूपेण प्रतीयते तथा अविविक्तस्वरूप आत्मा नित्यशुद्धबुद्ध-मुक्तस्वभावः, अनात्मरूपेण, परिच्छिन्नजीवरूपेण च मिथ्या प्रतीयत इति । 'अज्ञानजं तमः' इत्युच्यते, न मृद्घटवद् कार्यकारणभावमुपेत्य – इत्यदोषः । एवमेव हि

(९) कच्चिदेतत् श्रुतं पार्थ त्वयैकाग्रेण चेतसा ।
कच्चिदज्ञानसंमोहः प्रणष्टस्ते धनञ्जय ॥ १८–७२.

[ 'अज्ञानसंमोहः – अज्ञाननिमित्तः संमोहः, विचित्तभावः, अविवेकः स्वाभाविकः' इति भाष्यम् ॥ ]

इति प्रश्नः, 'नष्टो मोहः' (१८–७३) इति प्रत्युत्तरं च संगच्छत इति ॥

'अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः' इत्यावरणत्व-व्यपदेशस्तु अज्ञानस्य मिथ्याज्ञानजननद्वारेण बाह्यदृष्ट्यापादकत्वेनेति व्याख्येयमिति सर्वमनाकुलम् ॥

अयमपि ज्ञानाज्ञानयोर्बाध्यबाधकभावेनोपन्यासो न परमार्थदृष्ट्या, किं तु अविद्यादृष्ट्यैवेति न प्रस्मर्तव्यम् । न हि नित्यचैतन्यज्योतिः-स्वरूपस्यात्मनः परमार्थत एवाज्ञानाश्रयत्वम् उपपद्यते । येन तस्याज्ञानस्य ज्ञानविनाश्यत्वमवकल्पेत । अत्र तु प्रमाणं भगवदुक्तिरेव –

(१०) ज्योतिषामपि तज्ज्योतिस्तमसः परमुच्यते ॥ १३-१७.

इति आत्मनस्तमसोऽज्ञानात् परत्वोपदेष्ट्री । तदिदमाह भाष्यकारोऽपि विस्पष्टम् –

(अ) यथा बुद्ध्याद्याहृतस्य शब्दाद्यर्थस्य अविक्रिय एव सन् बुद्धिवृत्त्या अविवेकविज्ञानेन अविद्यया 'उपलब्धा' आत्मा कल्प्यते, एवमेव आत्मानात्मविवेकज्ञानेन बुद्धिवृत्त्या विद्यया असत्यरूपयैव परमार्थतोऽविक्रिय एवात्मा 'विद्वान्' उच्यते ॥ भा. पा. १९

इति ॥

ज्ञानिस्तुतिः –

९५. सर्वज्ञत्वात् अवाप्तपुरुषार्थत्वात् ज्ञानी 'कृत्स्नवित्', 'सर्वकर्मकृत्', 'नित्ययुक्तः', 'एकभक्तिः', 'भगवतोऽत्यर्थं प्रियः' – इति च संस्तूयतेऽत्र –

(१) ज्ञानं तेऽहं सविज्ञानमिदं वक्ष्याम्यशेषतः ।
यज्ज्ञात्वा नेह भूयोऽन्यज्ज्ञातव्यमवशिष्यते ॥ [1] ७-२.

भाष्यम् (1) – यज्ज्ञात्वा यज्ज्ञानं ज्ञात्वा नेह भूयः पुनः, अन्यत् ज्ञातव्यं पुरुषार्थसाधनम् अवशिष्यते नावशिष्टं भवतीति मत्तत्त्वज्ञो यः स सर्वज्ञो भवतीत्यर्थः ॥ भा. पा. ११७.

(२) एतद् बुद्ध्वा बुद्धिमान् स्यात् कृतकृत्यश्च भारत ॥ १५-२०.

भाष्यम् (2) – एतच्छास्त्रं यथादर्शितार्थं बुद्ध्वा बुद्धिमान् स्यात् भवेत् नान्यथा; कृतकृत्यश्च भारत । कृतं कृत्यं कर्तव्यं येन स कृतकृत्यः । विशिष्टजन्मप्रसूतेन ब्राह्मणेन यत् कर्तव्यम्, तत् सर्वं

1. आत्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेनेदं सर्वं विदितम् ॥ बृ. २-४-५.

भगवत्तत्त्वे विदिते कृतं भवेत् इत्यर्थः। न चान्यथा कर्तव्यं परिसमाप्यते कस्यचित् – इत्यभिप्रायः ॥ भा. पा. २३७.

(३) कर्मण्यकर्म यः पश्येदकर्मणि च कर्म यः।
स बुद्धिमान् मनुष्येषु स युक्तः कृत्स्नकर्मकृत् ॥ ४–१८

(४) तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते।
प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः ॥ ७–१७.

ज्ञानी कर्मयोगध्यानयोगभक्तियोगानां परमफलमवाप्तवानिति यथोदाहृत-वाक्यानां समुदितार्थः। अत एव ज्ञानमपि यज्ञत्वेन, तपस्त्वेन पवित्र-तमत्वेन च स्तुतमिह शास्त्रे –

(अ) श्रेयान् द्रव्यमयाद् यज्ञाज्ज्ञानयज्ञः परन्तप।
सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते ॥ ४–३३.

(आ) वीतरागभयक्रोधा मन्मया मामुपाश्रिताः।
बहवो ज्ञानतपसा पूता मद्भावमागताः ॥ ४–१०.

(इ) न हि ज्ञानेन सदृशं पवित्रमिह विद्यते ॥ ४–३८.

(ई) राजविद्या राजगुह्यं पवित्रमिदमुत्तमम् ॥ ९–२.

एवम् ज्ञानं सर्वपापहरम्, संशयच्छेत्तृ, मोहविनाशकम्, कर्मबन्ध-विमोचकम्, शान्त्यादिशब्दव्यपदेश्यपरमपुरुषार्थदातृ चेति गीतासु बहुधा संस्तुतम् –

(उ) अपि चेदसि पापेभ्यः सर्वेभ्यः पापकृत्तमः।
सर्वं ज्ञानप्लवेनैव वृजिनं संतरिष्यसि ॥ ४–३६.

(ऊ) योगसंन्यस्तकर्माणं ज्ञानसञ्छिन्नसंशयम्।
आत्मवन्तं न कर्माणि निबध्नन्ति धनञ्जय ॥ ४–४१.

(ए) यज्ज्ञात्वा न पुनर्मोहमेवं यास्यसि पाण्डव ॥ ४–३५.

(ऐ) ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा ॥ ४–३७.

(ओ) ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति ॥ ४-३९.
यज्ज्ञात्वा मुनयः सर्वे परां सिद्धिमितो गताः ॥ १४-१.
इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ॥ १४-२.

## ज्ञानिनो लक्षणानि मुमुक्षूणां पुरुषार्थसाधनानि –

९६. कृतार्थस्य ज्ञानिनः प्रतिष्ठितब्रह्मात्मविवेकप्रज्ञत्वात् 'स्थितप्रज्ञः' इति, योगेनाऽऽत्मन्येवावस्थितत्वात् 'युक्तः' इति भगवन्तमेवानन्यतया भजत इत्यतो 'भक्तः' इति, त्रीनपि गुणान् अतीत्य निर्गुणे स्वे रूपे वर्तत इत्यतो 'गुणातीतः' इति च व्यपदेशो भवति । यान्येव स्थितप्रज्ञादिलक्षणानि तान्येव च मुमुक्षूणां मुक्तिप्राप्तये साधनानि भवन्तीत्यतस्तानि लक्षणानि विस्तरशः कथितान्यत्र । तस्मात् –

(१) प्रजहाति यदा कामान् सर्वान् पार्थ मनोगतान् ।
आत्मन्येवात्मना तुष्टः स्थितप्रज्ञस्तदोच्यते ॥[1] २-५५

इत्यारभ्य

तस्माद्यस्य महाबाहो निगृहीतानि सर्वशः ।
इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥ २-६८

इत्यन्तं कथितानि स्थितप्रज्ञलक्षणानि,

(२) ज्ञानविज्ञानतृप्तात्मा कूटस्थो विजितेन्द्रियः ।
युक्त इत्युच्यते योगी समलोष्टाश्मकाञ्चनः ॥ ६-८.
सुहृन्मित्रार्युदासीनमध्यस्थद्वेष्यबन्धुषु ।
साधुष्वपि च पापेषु समबुद्धिर्विशिष्यते ॥ ६-९.

---

1. यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः ।
अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते ॥ का. २-३-१४.

यदा विनियतं चित्तमात्मन्येवावतिष्ठते ।
निःस्पृहः सर्वकामेभ्यो युक्त इत्युच्यते तदा ॥ ६-१८.

इति च वर्णितस्य 'युक्त'स्य लक्षणानि,

(३) अद्वेष्टा सर्वभूतानां मैत्रः करुण एव च ।
निर्ममो निरहङ्कारः समदुःखसुखः क्षमी ॥ १२-१३.

इत्यारभ्य

तुल्यनिन्दास्तुतिर्मौनी सन्तुष्टो येनकेनचित् ।
अनिकेतः स्थिरमतिर्भक्तिमान् मे प्रियो नरः ॥ १२-१९.

इत्यन्तं कथितानि भक्तलक्षणानि, तथा

(४) प्रकाशं च प्रवृत्तिं च मोहमेव च पाण्डव ।
न द्वेष्टि संप्रवृत्तानि न निवृत्तानि काङ्क्षति ॥ १४-२२

इत्यारभ्य

मानापमानयोस्तुल्यस्तुल्यो मित्रारिपक्षयोः ।
सर्वारम्भपरित्यागी गुणातीतः स उच्यते ॥ १४-२५

इत्यन्तग्रन्थेन समुपवर्णितानि गुणातीतलक्षणानि च ज्ञानिनामेव तत्तद्दृष्टिविशेषमालम्ब्य कथितानि । तानि निरन्तराभ्यासेन साधयितुं प्रयतितव्यं मुमुक्षुभिः स्थितप्रज्ञत्वादिसिद्ध्यर्थम् । तथा चाह भाष्यकृत् –

(1) सर्वत्रैव हि अध्यात्मशास्त्रे कृतार्थलक्षणानि यानि तान्येव साधनानि उपदिश्यन्ते, यत्नसाध्यत्वात् ॥ भा॰ २-५५, पा॰ ३३

इति ॥

## ज्ञानिनः कर्म ब्रह्मैव, संन्यासिज्ञानिनो ज्ञानमेव यज्ञः –

९७. यद्यपि ज्ञानी स्वज्ञानबलात् सर्वदा स्वात्मन्येव निष्क्रियेऽवस्थित इति तस्य कृतेनाकृतेन वा इष्टमनिष्टं वा नैव भवेत्,

अत एव च कृतकृत्यस्य तस्य नावाप्तव्यं परिहर्तव्यं वा समस्ति किञ्चित्, तथापि परदृष्ट्या स यत्रकुत्राश्रमे वसेत् तत्तदुचितानि कर्माणि लोकसंग्रहार्थं कुर्वन्निव लक्ष्यमाणोऽपि नैव किञ्चित् करोति परमार्थतः। स्वदृष्ट्या हि तस्य कर्माणि तत्कारकाणि फलानि च ब्रह्मैव भवन्ति। एवं संन्यस्तसर्वकर्मणोऽपि परमहंसपरिव्राजकस्य तस्य नाकर्मित्वकृता दोषसंसृष्टिः स्यात्, यतो ब्रह्मैव तस्य कर्मादीति ॥

(१) यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः।
आत्मन्येव च संतुष्टस्तस्य कार्यं न विद्यते ॥[1] ३-१७.
नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन।
न चास्य सर्वभूतेषु कश्चिदर्थव्यपाश्रयः ॥ ३-१८.

(२) कर्मणैव हि संसिद्धिमास्थिता जनकादयः।
लोकसंग्रहमेवापि संपश्यन् कर्तुमर्हसि ॥ ३-२०.

[ कर्मणा आभासरूपेण सहैव, न तु मोक्षार्थं ज्ञानसमुच्चितेन ॥ ]

यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः।
स यत् प्रमाणं कुरुते लोकस्तदनुवर्तते ॥ ३-२१.

[ यत्प्रमाणं कुरुते लौकिकं वैदिकं वा, तदाचरितं कर्म ध्यानवैराग्यादि च सदाचार इति प्रमाणीकरोति लोकः ॥ ]

(३) सक्ताः कर्माण्यविद्वांसो यथा कुर्वन्ति भारत।
कुर्यात् विद्वांस्तथाऽसक्तश्चिकीर्षुर्लोकसंग्रहम् ॥ ३-२५.
न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम्।
जोषयेत् सर्वकर्माणि विद्वान् युक्तः समाचरन् ॥ ३-२६.

[ अत्र 'जोषयेत्' इति न विधिराशङ्कनीया ज्ञानिनो विध्यगोचरत्वात्। तत्स्वभावमात्रं त्विदमनूद्यते 'कुर्याद्विद्वांस्तथाऽसक्तः' इत्यादिना। न हि 'मया इदं कर्तव्यं लोकसंग्रहार्थम्, फलं च भोक्तव्यम्' इति मतिर्भवेद्विदुष इति ॥ ]

---

1. 'आत्मक्रीड आत्मरतिः क्रियावानेष ब्रह्मविदां वरिष्ठः' ॥ मुं॰ ३-१-४.

(४) यस्य सर्वे समारम्भाः कामसङ्कल्पवर्जिताः ।
ज्ञानाग्निदग्धकर्माणं तमाहुः पण्डितं बुधाः ॥ ४–१९.
त्यक्त्वा कर्मफलासङ्गं नित्यतृप्तो निराश्रयः ।
कर्मण्यभिप्रवृत्तोऽपि नैव किञ्चित् करोति सः ॥ ४–२०.

[पराध्यारोपितदृष्ट्या ज्ञानी लोकसंग्रहार्थं कर्मणि प्रवृत्तोऽपि स्वदृष्ट्या निष्क्रियात्मस्वरूपेणैव स्थितः – इत्ययं नैव किञ्चित् करोति ॥ ]

गतसङ्गस्य मुक्तस्य ज्ञानावस्थितचेतसः ।
यज्ञायाचरतः कर्म समग्रं प्रविलीयते ॥ ४–२३.

[अथ 'यज्ञाय' इति न तृतीयाध्यायोक्तप्रकारेण 'ईश्वरतुष्ट्यर्थम्' इत्यर्थः, 'मुक्तस्य' इति सर्वधर्माधर्मबन्धान्मुक्तस्य ज्ञानिनो जीवेश्वरभेदबुद्ध्यभावात्; लोकसंग्रहार्थं कर्म कुर्वतस्तस्य यज्ञोऽपि ज्ञानयज्ञ एव; अतः कर्मरूपेण तन्नावतिष्ठते इत्यभिप्रायेण 'यज्ञायाचरतः कर्म' इत्युक्तमिति ध्येयम् ॥ ]

(५) निराशीर्यतचित्तात्मा त्यक्तसर्वपरिग्रहः ।
शारीरं केवलं कर्म कुर्वन्नाप्नोति किल्बिषम् ॥ ४–२१.

[संन्यस्तसर्वकर्मणः परमहंसस्य विषयोऽयम्। किल्बिषं=धर्माधर्मफलभूतं संसारम् ॥]

(६) नैव किञ्चित् करोमीति युक्तो मन्येत तत्त्ववित् ।
पश्यन् शृण्वन् स्पृशन् जिघ्रन् अश्नन् गच्छन् स्वपन् श्वसन् ॥
प्रलपन् विसृजन् गृह्णन्नुन्मिषन्निमिषन्नपि ।
इन्द्रियाणीन्द्रियार्थेषु वर्तन्त इति धारयन् ॥ ५–८, ९.

[सर्वकर्मसंन्यासं कृतवतोऽनिवार्याणि दर्शनश्रवणादीन्येव दर्शितानि । तेष्वपि 'गुणा गुणेषु वर्तन्ते' इति धारणेनासङ्गत्वप्रदर्शनार्थम् ॥ ]

(७) ब्रह्मार्पणं ब्रह्महविर्ब्रह्माग्नौ ब्रह्मणा हुतम् ।
ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिना ॥ ४–२४.

[अत्र ज्ञानिनः परदृष्ट्या गृहस्थकर्माणि शास्त्रीयाणि कुर्वतोऽपि ब्रह्मबुद्ध्युपमृदितत्वात् सर्वं क्रियाकारकफलजातं तद्दृष्ट्या ब्रह्मैवेत्यभिहितम् । सर्वकर्मसंन्यासिस्तुत्यर्थं चैतद् भवति ॥ ]

भाष्यम् – एवं लोकसंग्रहं चिकीर्षुणापि क्रियमाणं कर्म परमार्थतो-ऽकर्म, ब्रह्मबुद्ध्युपमृदितत्वात् । एवं सति निवृत्तकर्मणोऽपि सर्वकर्म-संन्यासिनः सम्यग्दर्शनस्तुत्यर्थं यज्ञत्वसंपादनं ज्ञानस्य सुतरामुपपद्यते ; यदर्पणादि अधियज्ञे प्रसिद्धं तदस्य अध्यात्मं ब्रह्मैव परमार्थदर्शिनः इति ॥ भा. पा. ७४.

## शरीरत्यागात् ऊर्ध्वं विदेहमुक्तिः –

९८. यद्यपि ब्रह्मात्मना अवस्थितिर्जीवन्मुक्तिर्दृष्टमेव फलं ज्ञानस्य, तथापि ब्रह्मभूतस्य ज्ञानिनो न प्रेत्य पुनः संसारे निवृत्तिः स्यात् इत्यभिप्रायेण विदेहमुक्तिरपि फलत्वेनोपचर्यते तत्र तत्रास्मिन् शास्त्रे । जीवन्मुक्तिरेव तु मुख्यं फलं ज्ञानस्येति स्थितम् ॥

(१) एषा ब्राह्मी स्थितिः पार्थ नैनां प्राप्य विमुह्यति ।
स्थित्वाऽस्यामन्तकालेऽपि ब्रह्मनिर्वाणमृच्छति ॥ २–७२

[ ब्राह्मी स्थितिः–ब्रह्मरूपेणैवावस्थानम्, जीवन्मुक्तिः ; ब्रह्मनिर्वाणम् – शरीरपातानन्तरं ब्रह्मण्येवोपरमः, विदेहमुक्तिः । तथा हि भाष्यम् ' स्थित्वा अस्यां स्थितौ ब्राह्मयां यथोक्तायाम् अन्तकालेऽपि अन्त्येऽपि वयसि ब्रह्मनिर्वाणं ब्रह्मनिर्वृतिं मोक्षम् ऋच्छति गच्छति ' इति ॥ ]

(२) तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः ।
गच्छन्त्यपुनरावृत्तिं ज्ञाननिर्धूतकल्मषाः ॥ ५–१७.

भाष्यम् (1) – तन्निष्ठाः । निष्ठा अभिनिवेशः, तात्पर्यम्, सर्वाणि कर्माणि संन्यस्य तस्मिन् ब्रह्मण्येवावस्थानम्, येषां ते तन्निष्ठाः । .... येषां ज्ञानेन नाशितम् अज्ञानम् ते गच्छन्ति एवंविधा अपुनरावृत्तिम् अपुनर्देहसंबन्धं ज्ञाननिर्धूतकल्मषाः ॥ भा.पा. ९२.

[ ज्ञानेन – विवेकेन, अज्ञानम् – आत्मानात्मसंयोगः, अध्यासस्वरूपः । अज्ञानस्वरूपविवेकः पूर्वं (खं. ९१) कृतः, अत्राप्यनुसंधेयः ॥ ]

16

(३) स योगी ब्रह्मनिर्वाणं ब्रह्मभूतोऽधिगच्छति ॥ ५-२४.

(2) स योगी ब्रह्मनिर्वाणं ब्रह्मणि निर्वृतिं मोक्षम् इह जीवन्नेव ब्रह्मभूतः सन् अधिगच्छति प्राप्नोति ॥ भा.पा. ९५.

[ योगी – ब्रह्मयोगयुक्तात्मा ज्ञानी ]

इति श्रीमत्परमहंसपरिव्राजकाचार्यवरेण्यश्रीपूज्यपादश्रीमच्छङ्करभगवच्चरणस्मरण-
परिचयावाप्तवेदान्तप्रवेशेन श्रीबोधानन्देन्द्रसरस्वतीशिष्येण
सच्चिदानन्देन्द्रसरस्वत्याख्येन भिक्षुणा प्रणीते
गीताशास्त्रार्थविवेके ज्ञानयोगविवेको नाम षोडशोऽध्यायः

---

# १७. भक्तिज्ञानसंबन्धविवेकः

## भक्तिज्ञानयोर्भेदो व्यवहारदृष्ट्यैव –

९९. अथ भक्तिज्ञानयोः संबन्धो विवेचनीयः । यतोऽत्र यथैव ज्ञानप्रशंसा भूयशः कृता उपलभ्यते, तथैव भक्तिप्रशंसाप्युपलभ्यते । तद्यथा –

(१) य इमं परमं गुह्यं मद्भक्तेष्वभिधास्यति ।
भक्तिं मयि परां कृत्वा मामेवैष्यत्यसंशयः ॥ १८-६८.
न च तस्मान्मनुष्येषु कश्चिन्मे प्रियकृत्तमः ।
भविता न च मे तस्मादन्यः प्रियतरो भुवि ॥ १८-६९.

भक्तिप्रशंसयैव चोपक्षीणं शास्त्रम् । अतः कोऽनयोः संबन्ध इति मीमांस्यमेतत् ॥

अत्रेदं तत्त्वम् । न ज्ञानं भक्तिरिति द्वौ पदार्थावेतौ एकस्यैव तु सवितरीवौष्ण्यं प्रकाशम् इति च कल्पितभेदमाश्रित्य व्यपेक्षाभेदात् व्यपदेशोऽयम् । न हि भक्तिभावव्यावृत्तमपि भगवत्तत्त्वज्ञानम्, ज्ञानत्वव्यावृत्ता वा भक्तिर्मनसा चिन्तयितुमपि शक्यते । न हि "तदेतत् प्रेयः पुत्रात् प्रेयो वित्तात् प्रेयोऽन्यस्मात् सर्वस्मादन्तरतरं यदयमात्मा" (बृ. १-४-८) इति श्रुतेः सर्वान्तरे स्वात्मनि ज्ञानं जातम्, भक्तिस्तु न प्रादुर्भूता इति कथञ्चिदपि शक्यं कल्पयितुम् । न च सर्वान्तरे परमात्मनि निरतिशयप्रीतिः समस्ति तज्ज्ञानं विनैव । अज्ञाते वस्तुनि प्रीत्यप्रीत्योरसंभवादेव । अत एव ज्ञानिनं परमभक्तत्वेन निर्दिशति भगवान् –

(२) चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन ।
आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ ॥ ७-१६.

तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते ।
प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः ॥ ७-१७.

उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतम् ।
आस्थितः स हि युक्तात्मा मामेवानुत्तमां गतिम् ॥ ७-१८

इति । किञ्च, नात्मा आत्मनो भिन्नः । वासुदेवश्च भगवान् सर्वेषां भूतानाम् आत्मा । 'अहमात्मा गुडाकेश सर्वभूताशयस्थितः' (१०-२०) इति वचनात् । तदेवं भगवन्तं स्वात्मत्वेनैव विजानतो न मुख्यवृत्तेन ज्ञानं भक्तिर्वा अन्तःकरणधर्मभूता शक्यकल्पना ज्ञानिपरमात्मभेदं सांव्यवहारिकं कल्पितमन्तरेण । अतो यथैव भूमविद्यायाम् ज्ञानी 'नान्यत् पश्यति नान्यच्छृणोति नान्यद् विजानाति' (छां. ७-२४-१) इत्यत्र, यथा वा इहापि 'यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः । आत्मन्येव च सन्तुष्टस्तस्य कार्यं न विद्यते ॥' (३-१७) इत्यत्र रत्यादयो बाह्यवस्तुनिरपेक्षाः, आत्मनिमित्तमेव तु सर्वं विदुष इत्येव विवक्ष्यते अन्यादृशानामसम्भवात् ; एवमेव इहापि ज्ञानं भक्तिश्चेत्येतत् स्वात्मनिमित्तमेव न स्वान्यज्ञेयप्रीयमाणविषयमिति श्लिष्यते । तस्मात् 'यथैव ममात्मा भूतभावनः' (९-५) इति वासुदेवे एवैकस्मिन् लोकबुद्धिमनुसृत्याध्यारोपितभेददृष्ट्या व्यपदेशः, एवमेव 'आत्मज्ञानी' 'परमात्मभक्त' इति च व्यपदेश इति बोध्यम् । एवमेव हि –

(३) सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः ।
सर्वथा वर्तमानोऽपि स योगी मयि वर्तते ॥ ६-३१.

(४) ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते ।
सर्वत्रगमचिन्त्यं च कूटस्थमचलं ध्रुवम् ॥
संनियम्येन्द्रियग्रामं सर्वत्र समबुद्धयः ।
ते प्राप्नुवन्ति मामेव सर्वभूतहिते रताः ॥ १२-३.

इत्यादिस्थलेषु निर्विशेषेऽपि भगवति विदुषां भक्तिः, तस्मिन् वर्तनम्, तत्पर्युपासनम्, तत्प्राप्तिर्वा मुख्याख्येया भवेत्। अतः सर्वथाऽप्यत्रत्यं भाष्यं सावधानमवलोकनीयम् ॥

## ज्ञानपरभक्तिभगवत्प्रवेशानां न कालकृतः क्रमोऽस्ति –

१००. एवमेव कल्पितभेदमाश्रित्य भक्त्या ज्ञानं ज्ञानाद् भगवत्प्राप्तिश्चेति व्यपदेशो व्याख्येयः –

(१) ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति ।
समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम् ॥ १८-५४.
भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः ।
ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम् ॥[1] १८-५५.

अत्र भाष्यम् –

(1) ब्रह्मभूतस्यायं स्वभावोऽनूद्यते 'न शोचति, न काङ्क्षति' इति । न ह्यप्राप्तविषयाकाङ्क्षा ब्रह्मविदः उपपद्यते । 'न हृष्यति' इति वा पाठः । समः सर्वेषु भूतेषु । आत्मौपम्येन सर्वेषु भूतेषु सुखं दुःखं वा सममेव पश्यति – इत्यर्थः । नात्मसमदर्शनमिह ; तस्य वक्ष्यमाणत्वात् 'भक्त्या माम् अभिजानाति' इति । एवंभूतो ज्ञाननिष्ठो मद्भक्तिं मयि परमेश्वरे भक्तिं भजनं पराम् उत्तमाम् ज्ञानलक्षणां चतुर्थीं लभते । 'चतुर्विधा भजन्ते माम्' (७-१६) इति हि उक्तम् ॥ भा.पा. २८३.

---

1. संप्राप्यैनमृषयो ज्ञानतृप्ताः कृतात्मानो वीतरागाः प्रशान्ताः ।
ते सर्वगं सर्वतः प्राप्य धीराः युक्तात्मानः सर्वमेवाविशन्ति ॥
मुं ३-२-५.

(2) ततो ज्ञानलक्षणया भक्त्या माम् अभिजानाति – यावानहम् उपाधिकृतविस्तरभेदः, यश्चाहं विध्वस्तसर्वोपाधिभेदः उत्तमपुरुष आकाशकल्पः – तं माम् अद्वैतं चैतन्यमात्रैकरसम् अजम् अजरम्, अमरम्, अभयम्, अनिधनं तत्त्वतोऽभिजानाति । ततो माम् एवं तत्त्वतो ज्ञात्वा विशते तदनन्तरं मामेव । नात्र ज्ञानानन्तरप्रवेशक्रिये भिन्ने विवक्षिते 'ज्ञात्वा विशते तदनन्तरम्' इति, किं तर्हि फलान्तराभावात् ज्ञानमात्रमेव 'क्षेत्रज्ञं चापि मां विद्धि' (१३-२) इत्युक्तत्वात् ॥ भा. पा. २८३-२८४.

एवं चायमत्राशयोऽध्यवसेयः – ब्रह्मभूतो ज्ञाननिष्ठो भवति, ज्ञाननिष्ठ एव परभक्तो नाम । स एव च भगवन्तं तत्त्वतो ज्ञातवान् तं प्रविष्टश्चेति ; न पुनर्भक्त्या अभिजानाति, अभिज्ञाय च तदनन्तरमेव तं प्रविशते इति हेतुहेतुमद्भावः कालक्रमश्च विवक्षित इति भ्रमितव्यम् ॥

## ज्ञानप्रपत्त्योरपि नार्थान्तरत्वम् –

१०१. एतेन 'ज्ञानवान् मां प्रपद्यते' (७–१९) इत्येवजातीयकान्यपि वचनानि व्याख्यातानि वेदितव्यानि । तत्रापि हि ज्ञानमन्यत् साधनभूतम्, प्रपत्तिस्तु तत्साध्या इत्यविचारिततत्त्वानां भ्रान्तिरुपजायेतैव । न त्वेतदस्ति । अत एव व्याख्यानं भाष्यकारस्य–

(१) बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते ।
वासुदेवः सर्वमिति स महात्मा सुदुर्लभः ॥ ७-१९.

इति पूर्णः श्लोकः । भाष्यं तु –

(1) बहूनां जन्मनां ज्ञानार्थसंस्काराश्रयाणाम् अन्ते समाप्तौ ज्ञानवान् प्राप्तपरिपाकज्ञानो मां वासुदेवं प्रत्यगात्मानं प्रत्यक्षतः प्रपद्यते । कथम् ? 'वासुदेवः सर्वम्' इति । य एवं सर्वात्मानं मां नारायणं

प्रतिपद्यते स महात्मा । न तत्समोऽन्योऽस्ति अभ्यधिको वा । अतः सुदुर्लभः । 'मनुष्याणां सहस्रेषु' (७-३) इत्युक्तम् ॥ भा.पा. १२२.

अत्र हि नायमर्थः श्लोकस्य बहूनामेव जन्मनामन्ते भगवत्प्राप्तिर्भवेत्, नैकस्मिन्नेव जन्मनि सा भवेत् इति । न हि नित्यसिद्धस्य सर्वात्मनः सर्वस्याप्यात्मन एव च सतः प्रपत्तिः प्राप्तिर्वस्तुत एव संपादयितव्या इति युक्तिमत् । अविद्यामात्रव्यवहितत्वाच्च तत्प्रतिबन्धापनय एव हि केवलं कर्तव्यः । स चापनयो नासंस्कृतबुद्धीनां सहसा समासाद्यः, कथं तर्हि, दीर्घकालमभ्यस्तध्यानयोगैरेव चित्तविशुद्धिमवाप्येत्यत उक्तं 'बहूनां जन्मनामन्ते' इति । तदेतत् संसूचितं भाष्ये 'ज्ञानार्थसंस्काराश्रयाणामन्ते' इति विशेषणादानेन । उक्तं ह्येतदपि भगवतैव –

(२) प्रयत्नाद् यतमानस्तु योगी संशुद्धकिल्बिषः ।
अनेकजन्मसंसिद्धस्ततो याति परां गतिम् ॥ ६-४५.

इति । तत्र च भाष्यम् –

(2) अनेकेषु जन्मसु किञ्चित् किञ्चित् संस्कारजातम् उपचित्य तेनोपचितेन अनेकजन्मकृतेन संसिद्धः, अनेकजन्मसंसिद्धः । ततो याति लब्धसम्यग्दर्शनः सन् याति परां प्रकृष्टां गतिम् ॥ भा. पा. ११५.

तत्र यदेवोक्तं 'प्रयत्नाद् यतमानः' इति तदेवेहोच्यते 'बहूनां जन्मनामन्ते ज्ञानवान्' इति । यदेवापि च तत्र 'ततो याति परां गतिम्' इति । तदेवेह 'मां प्रपद्यत' इति नात्र ज्ञानान्तरं कार्यं अवशिष्यते प्रपत्तिर्नाम – इत्यवसातुं युक्तम् । वाक्यशेषाच्च –

(३) कामैस्तैस्तैर्हृतज्ञानाः प्रपद्यन्तेऽन्यदेवताः ।
तं तं नियममास्थाय प्रकृत्या नियताः स्वया ॥ ७-२०

इति शास्त्रोक्तनियमाश्रयपूर्वकं तां तां देवताम् आराधितवतां तत्तत्प्राप्तिरेव प्रपत्तिरुच्यते। इयं च देवताप्राप्तिस्तत्तदाराधनप्रयुक्ता उत्तरत्रानूद्यतेऽपि –

(४) देवान् देवयजो यान्ति मद्भक्ता यान्ति मामपि ॥ ७-२३.

इति। अथवा 'अन्यदेवताः प्रपद्यन्ते' आराधनार्थं शरणं गच्छन्ति-इत्यपि व्याख्यातुं शक्यः श्लोकः, उत्तरत्रैव तु देवप्राप्तिफलं कथयिष्यत इति च। एवं हि –

(५) न मां दुष्कृतिनो मूढाः प्रपद्यन्ते नराधमाः ॥ ७-१५

इति श्लोकस्थप्रपत्त्यर्थानुगमो भवेत्। तथा च 'ज्ञानवान् मां प्रपद्यते' इति साधनानुष्ठानलब्धपरिपाकज्ञानः 'प्रत्यगात्मानं प्रत्यक्षतः प्रपद्यते' इत्यात्मानुभवगम्यत्वमापादयतीत्यर्थः संपद्यते। सर्वथापि तु न प्रपत्तिर्ज्ञानादर्थान्तरमिति सिद्धम् ॥

## ज्ञाननिष्ठैव परा भक्तिः –

१०२. एतेन ज्ञाननिष्ठाशब्दस्यार्थोऽपि विवेचितो भवति। निष्ठाशब्दस्तावत् तत्रैव स्थितिः – इत्यर्थकः, अनुष्ठेये तात्पर्यं वक्ति। तथा हि – 'कर्मनिष्ठः, तपोनिष्ठः' इत्यादिषु यस्तात्पर्येण कर्माद्यनुष्ठाने वर्तते, स एवमुच्यते। तथा च –

(१) लोकेऽस्मिन् द्विविधा निष्ठा पुरा प्रोक्ता मयाऽनघ।
ज्ञानयोगेन साङ्ख्यानां कर्मयोगेन योगिनाम् ॥ ३-३.

इत्यत्र भाष्यम् – 'निष्ठा स्थितिः, अनुष्ठेयतात्पर्यम्' इति 'ज्ञानयोगेन निष्ठा' इति तु ज्ञानसाधनानाम् अमानित्वादीनामनुष्ठाने तात्पर्यमुच्यते। अत एव हि भाष्यकृत् –

(२) युक्तः कर्मफलं त्यक्त्वा शान्तिमाप्नोति नैष्ठिकीम् ॥ ५-१२.

इत्यत्र व्याचष्टे –

(1) युक्तः 'ईश्वराय कर्माणि करोमि, न मम फलाय' इत्येवं समाहितः सन् कर्मफलं त्यक्त्वा परित्यज्य शान्तिं मोक्षाख्याम् आप्नोति नैष्ठिकीम्, निष्ठायां भवाम्, सत्त्वशुद्धिज्ञानप्राप्तिसर्वकर्मसंन्यासज्ञाननिष्ठाक्रमेण – इति वाक्यशेषः ॥ भा. ९०.

इति । अमानित्वादिसाधनगणोपदेशप्रकरणारम्भे च –

(2) अधुना तु तज्ज्ञानसाधनगणम् अमानित्वादिलक्षणम् – यस्मिन् सति तज्ज्ञेयविज्ञाने योग्योऽधिकृतो भवति, यत्परः संन्यासी ज्ञाननिष्ठ उच्यते तम् अमानित्वादिगणं – ज्ञानसाधनत्वात् ज्ञानशब्दवाच्यं विदधाति भगवान् ॥ भा. १३-७, पा. १९९.

इत्याह ॥

(३) भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः ॥ १८–५५

इत्यत्र तु या भक्तिशब्देनोच्यते ज्ञाननिष्ठा न सा अनुष्ठेयलक्षणा ; 'परा निष्ठा' (१८–५०), 'मद्भक्तिं लभते पराम्' (१८–५४) इति च विशेषणात् । अत एव ह्याचार्यो ज्ञाननिष्ठाशब्देन ज्ञानावृत्तिरुच्यते इत्यातस्थुषां मतमाशङ्क्य स्वाभिप्रायम् आविरकरोत् –

(3) ननु विरुद्धमिदमुक्तम्, ज्ञानस्य या परा निष्ठा तया मामभिजानातीति । कथं विरुद्धमिति चेत् उच्यते – यदैव यस्मिन् विषये ज्ञानमुत्पद्यते ज्ञातुः, तदैव तं विषयम् अभिजानाति, ज्ञाता – इति न ज्ञाननिष्ठां ज्ञानावृत्तिलक्षणाम् अपेक्षते इति । अतश्च ज्ञानेन नाभिजानाति ज्ञानावृत्त्या तु ज्ञाननिष्ठाम् अभिजानातीति ॥

नैष दोषः । ज्ञानस्य स्वात्मोत्पत्तिपरिपाकहेतुयुक्तस्य, प्रतिपक्षविहीनस्य यदात्मानुभवनिश्चयावसानत्वं तस्य निष्ठाशब्दाभिलापात् ।

शास्त्राचार्योपदेशेन ज्ञानोत्पत्तिपरिपाकहेतुं सहकारिकारणं बुद्धिविशुद्ध्यादि अमानित्वादि च अपेक्ष्य जनितस्य क्षेत्रज्ञपरमात्मैकत्वज्ञानस्य कर्तृत्वादि-कारकभेदबुद्धिनिबन्धनसर्वकर्मसंन्याससहितस्य स्वात्मानुभवनिश्चयरूपेण यदवस्थानम्, सा 'परा ज्ञाननिष्ठा' इत्युच्यते । सेयं ज्ञाननिष्ठा आर्तादिभक्तित्रयापेक्षया परा चतुर्थी भक्तिरित्युक्ता । तया परया भक्त्या भगवन्तं तत्त्वतोऽभिजानाति, यदनन्तरमेव ईश्वरक्षेत्रज्ञभेदबुद्धिरशेषतो निवर्तते । अतो 'ज्ञाननिष्ठालक्षणया भक्त्या माम् अभिजानाति' इति वचनं न विरुध्यते ॥ भा. १८–५५, पा. २८४.

अत एव हेतोः 'सर्वकर्मसंन्यासः', 'ज्ञाननिष्ठा' च अविद्या-ध्यस्तकर्मविधूननेन नित्यसिद्धनिष्क्रियात्मस्वरूपेणावस्थानमेव, न तु काचित् क्रियेति कर्मणीव न तत्र चोदनापेक्षास्ति । अविद्यामात्रव्यव-हितत्वात् नैष्कर्म्यस्य । अविद्यापगमे चोदनाया अप्यप्रमाणीभावाच्च । तदप्युक्तं भगवता भाष्यकारेण 'या निशा सर्वभूतानाम्' (२–६९) इति श्लोकव्याख्यानावसरे –

(4) 'प्रमाणभूतेन वेदेन मम चोदितं कर्तव्यं कर्म' इति हि कर्मणि कर्ता प्रवर्तते नाविद्यामात्रं इदं सर्वं निशेवेति । यस्य पुनः 'निशेव अविद्यामात्रमिदं सर्वं भेदजातम्' इति ज्ञानम्, तस्य आत्मज्ञस्य सर्व-कर्मसंन्यास एवाधिकारो न प्रवृत्तौ । तथा च दर्शयिष्यति 'तद्बुद्धय-स्तदात्मानः' (५–१७) इत्यादिना ज्ञाननिष्ठायामेव तस्याधिकारम् । तत्रापि प्रवर्तकप्रमाणाभावे प्रवृत्त्यनुपपत्तिरिति चेत् । न । स्वात्म-विषयत्वादात्मज्ञानस्य । न ह्यात्मनः स्वात्मनि प्रवर्तकप्रमाणापेक्षता । आत्मत्वादेव । तदन्तत्वाच्च सर्वप्रमाणानां प्रमाणत्वस्य । न ह्यात्म-स्वरूपाधिगमे सति पुनः प्रमाणप्रमेयव्यवहारः संभवति । प्रमातृत्वं ह्यात्मनो निवर्तयति अन्त्यं प्रमाणम् । निवर्तयदेव चाप्रमाणीभवति

स्वप्नकालप्रमाणमिव प्रबोधे । लोके च वस्त्वधिगमे प्रवृत्तिहेतुत्वादर्शनात् प्रमाणस्य ॥ भा. पा. ३९.

[ सर्वप्रमाणानाम् इति चोदकप्रमाणभूतवेदस्याप्यवरोधः ॥]

इति ॥

इत्थं च साधकैः क्रियमाणम् 'अमानित्वाद्यनुष्ठानम्' ज्ञाननिष्ठाशब्दवाच्यं यत्र, तत्र करणसाधनो निष्ठाशब्दः । निस्तिष्ठत्यनया इति । यदपि सर्वकर्मसंन्यासपूर्वकमभ्यस्यमानेन अनेन जनितस्य क्षेत्रज्ञेश्वरैकत्वज्ञानस्य स्वात्मानुभवनिश्चयरूपेणावस्थानम्, तदपि ज्ञाननिष्ठाशब्दवाच्यम्, यत्र भावसाधनो निष्ठाशब्दः निष्ठीयत इति । इमामेव परां निष्ठामालक्ष्य प्रतिज्ञातं शास्त्रावतरणिकायां भगवता आचार्येण "तच्च (निःश्रेयसं) सर्वकर्मसंन्यासपूर्वकात् आत्मज्ञाननिष्ठारूपाद् धर्माद् भवति" (भा.पा. २) इतीति सर्वमनाकुलम् ॥

## उपसंहारः –

१०३. तदेवं साधनरूपयोर्भक्तिज्ञानयोर्विविक्तत्वेऽपि फलरूपयोस्तयोरेकत्वमेवेति निश्चेयम् । प्रपत्तिशब्दश्च फलवाची तदर्थक एवेति च । एवं च ज्ञानप्रशंसाऽत्र भक्तिप्रशंसैवेति शास्त्रार्थो निर्मलो भवतीति ज्ञेयम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यवरेण्यश्रीपूज्यपादश्रीमच्छङ्करभगवच्चरणस्मरणपरिचयावाप्तवेदान्तप्रवेशेन श्रीबोधानन्देन्द्रसरस्वतीशिष्येण सच्चिदानन्देन्द्रसरस्वत्याख्येन भिक्षुणा प्रणीते गीताशास्त्रार्थविवेके भक्तिज्ञानसंबन्धविवेको नाम सप्तदशोऽध्यायः

---

# १८. भगवत्तत्त्वविवेकः

**भगवच्छब्दनिरुक्तिः –**

१०४. परिसमाप्तः साधनगतः शास्त्रार्थविवेकः । अथेदानीं यत्संबद्धमेव सत् कर्मध्यानभक्तिज्ञानलक्षणं सर्वं परमपुरुषार्थसाधनत्वं प्रतिपद्यते 'योग' संज्ञासंज्ञितं च भवति, तस्य भगवतो वासुदेवस्य ब्रह्मणः सतत्त्वं विविच्यते । तेन ह्यभिधेयवत्त्वं शास्त्रस्य सिध्यति नान्यथा । यथा प्रत्यज्ञासिष्टाचार्यः–

> (1) इमं द्विप्रकारं धर्मं निःश्रेयसप्रयोजनं परमार्थतत्त्वं च वासुदेवाख्यं परं ब्रह्माभिधेयभूतं विशेषतोऽभिव्यञ्जयत् विशिष्टप्रयोजन-संबन्धाभिधेयवद् गीताशास्त्रम् ॥ भा॰ पा॰ २

इति ॥

तत्र भगवच्छब्दस्तावत् साक्षाद्गीतासु द्विरेव प्रयुक्तः –

(१) न हि ते भगवन् व्यक्तिं विदुर्देवा न दानवाः ॥ १०-१४
(२) केषु केषु च भावेषु चिन्त्योऽसि भगवन् मया ॥ १०-१७

इति च । श्रीकृष्णार्जुनसंवादे तु तत्र तत्र सम्बन्धोक्तिरूपेण 'श्री भगवानुवाच' इत्यभ्यासो भगवच्छब्दस्य दृश्यते । आचार्यस्तु सकृदेव भगवच्छब्दस्य पुराणोक्तप्रकारेण शब्दनिर्वचनमाह (३–३७, पा. ५८) –

> ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः ।
> वैराग्यस्याथ मोक्षस्य षण्णां भग इतीरणा ॥ वि॰पु॰ ६–५–७४

उत्पत्तिं प्रलयं चैव भूतानामागतिं गतिम् ।
वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति ॥ वि. पु. ६-५-७८

इति । तत्रैश्वर्यादिकं यथा भगवतः सोपाधिके रूपे श्रीकृष्णाख्ये उत्कटम्, तथा उत्पत्त्यादिविषयकं च ज्ञानम् इति गीतास्वेव तावत् स्पष्टम् ॥

तत्र दिङ्मात्रमिह दर्शयिष्यामः —

(अ) मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः ॥ ९-४.
न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम् ॥ ९-५.

(आ) परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्मसंस्थापनार्थाय संभवामि युगे युगे ॥ ४-८.

(इ) स्थाने हृषीकेश तव प्रकीर्त्या
जगत्प्रहृष्यत्यनुरज्यते च ॥ ११-३६.

(ई) न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किञ्चन ।
नानवाप्तमवाप्तव्यं वर्त एव च कर्मणि ॥ ३-२२.

(उ) न च मां तानि कर्माणि निबध्नन्ति धनञ्जय ।
उदासीनवदासीनमसक्तं तेषु कर्मसु ॥ ९-९.

(ऊ) न मां कर्माणि लिम्पन्ति न मे कर्मफले स्पृहा ।
इति मां योऽभिजानाति कर्मभिर्न स बध्यते ॥ ४-१४.

(ए) बहूनि मे व्यतीतानि जन्मानि तव चार्जुन ।
तान्यहं वेद सर्वाणि न त्वं वेत्थ परन्तप ॥ ४-५.

(ऐ) वेदाहं समतीतानि वर्तमानानि चार्जुन ।
भविष्याणि च भूतानि मां तु वेद न कश्चन ॥ ७-२६.

(ओ) सर्वस्य चाहं हृदि संनिविष्टो
मत्तः स्मृतिर्ज्ञानमपोहनं च ।
वेदैश्च सर्वैरहमेव वेद्यो
वेदान्तकृद्वेदविदेव चाहम् ॥ १५-१५.

## भगवतो निरुपाधिकं रूपम् –

१०५. तत्र द्विविधं भगवतो रूपमवगम्यते – सोपाधिकं निरुपधिकं च । तत्र निरस्तसर्वोपाधिकं रूपमित्थं वर्णितमत्र –

(१) ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते ।
सर्वत्रगमचिन्त्यं च कूटस्थमचलं ध्रुवम् ॥ १२-३.

इति ॥

भाष्यम् – ये तु अक्षरम् अनिर्देश्यम् । अव्यक्तत्वादशब्दगोचरमिति न निर्देष्टुं शक्यते । अतो अनिर्देश्यम् । अव्यक्तम् । न केनापि प्रमाणेन व्यज्यत इत्यव्यक्तम् ॥

['अक्षरम्' इति (बृ. ३-८-८, मुं. १-१-५,६) श्रुतिसूचनम् । अव्यक्तमिति निर्विशेषत्वे सति सर्वशब्दप्रत्ययागोचरत्वादतद्धर्मप्रतिषेधमात्रगम्यत्वं सूचितम् ॥]

(२) 'अविनाशि तु तद्विद्धि' (२-१७), 'न जायते म्रियते वा' (२-२०), 'यो बुद्धेः परतस्तु सः' (३-४२)

इत्यादिश्लोकैरुपस्थापितमपि निरुपाधिकमेव रूपम् ॥

'क्षेत्रज्ञं चापि मां विद्धि' इत्युपक्रम्य क्षेत्रभेदकथनानन्तरम् –

(३) ज्ञेयं यत्तत् प्रवक्ष्यामि यज्ज्ञात्वाऽमृतमश्नुते ।
अनादिमत् परं ब्रह्म न सत्तन्नासदुच्यते ॥[1] १३-१२.
सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम् ॥ १३-१४.

इत्यादिना 'तमसः परमुच्यते'[2] (१३-१७) इत्येतदन्तेन ग्रन्थेन वर्णितमपि तदेव ॥

---

1. न सन्न चासच्छिव एव केवलः ॥ श्वे. ४-१८.
2. 'आदित्यवर्णं तमसः परस्तात्' श्वे. ३-८.

(४) यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः ।[1]
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥[2] १५-१८.

इति कथितं पुरुषोत्तमशब्दवाच्यमप्येतदेव रूपम् ॥

(५) परस्तस्मात्तु भावोऽन्योऽव्यक्तोऽव्यक्तात्[3] सनातनः ।
यः स सर्वेषु भूतेषु नश्यत्सु न विनश्यति ॥ ८-२०.
अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गतिम् ॥ ८-२१.

इति च व्याकृतजगद्बीजभूतादव्याकृतात्, अव्यक्ताक्षराभिधानीयकादपि परमसंस्पृष्टं सर्वजगद्विकल्पास्पदमेतद् रूपम् ॥

## सोपाधिकं व्यष्टिसमष्टिलक्षणमुपास्यम्—

१०६. सोपाधिकं तु रूपम् उपासनार्थमुपदिष्टम् –

(१) यद्यद् विभूतिमत् सत्त्वं श्रीमदूर्जितमेव वा ।
तत्तदेवावगच्छ त्वं मम तेजोंऽशसंभवम् ॥ १०-४१

इति यत्र यत्र विभूत्याद्यतिशयः स स भाव ईश्वरत्वेनोपास्य इत्युपदिश्यते, सर्वा हि विभूतिर्भगवत एव विस्तरः । तत्तेजोंऽशसंभूतत्वादिति ॥

(२) अथवा बहुनैतेन किं ज्ञातेन तवार्जुन ।
विष्टभ्याहमिदं कृत्स्नमेकांशेन[4] स्थितो जगत् ॥ १०-४२

इति च सर्वमेव जगत् भगवत एकांशसंभूतमिति 'ब्रह्मैवेदं विश्वम्' इत्युपास्यम् । तत्र च –

---

1. संयुक्तमेतत् क्षरमक्षरं च व्यक्ताव्यक्तं भरते विश्वमीशः ॥ श्वे० १-८.

2. एवमेवैष संप्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमपुरुषः ॥ छां० ८-१२-३.

3. 'अक्षरात्परतः परः' (मुं० २-१-२); 'अव्यक्तात्तु परः पुरुषः' (का० २-३-७).

4. पादोऽस्य विश्वा भूतानि ॥ ऋ० १०-९०-३.

(अ) अहमात्मा गुडाकेश सर्वभूताशयस्थितः ॥[1] १०–२०

इति सर्वस्यापि भूतस्य प्रत्यगात्मत्वेन उपास्यो भगवान्,

(आ) आदित्यानामहं विष्णुर्ज्योतिषां रविरंशुमान् ॥ १०–२१

इत्यादि

यच्चापि सर्वभूतानां बीजं तदहमर्जुन ॥ १०–३९

इत्येतदन्तं तत्तदुपाधियुक्तं वस्तु ईश्वरत्वेनोपास्यम्–इति व्यष्ट्युपासना,

(इ) कृत्स्नं जगद्विष्टभ्यैकांशेन स्थितः ॥ १०–४२

इति तु समष्ट्युपासना इति विभूत्युपासनाविवेकः ॥

(३) अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते ।
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥ ९–२२

इत्यत्रोपास्यत्वेन व्यपदिष्टमपि निरुपाधिकमेव । न ह्यनन्यत्वेनोपासनं नाम भावनात्मकं ध्यानं तत्र विवक्षितम्, किं तर्हि विज्ञानेनानन्यत्वेन ज्ञातस्य परमात्मनः, तादात्म्येनानुसंधानमात्रम् । अत एव भाष्यकार आह –

(1) अनन्याः अपृथग्भूताः परं देवं नारायणम् आत्मत्वेन गताः सन्तः चिन्तयन्तो मां ये जनाः संन्यासिनः पर्युपासते, तेषां परमार्थ दर्शिनाम्, नित्याभियुक्तानां सतताभियोगिनां योगक्षेमं–योगः अप्राप्तस्य प्रापणम्, क्षेमः तद्रक्षणम् । तदुभयं वहामि प्रापयाम्यहम् । 'ज्ञानी त्वात्मैव मे मतम्', 'स च मम प्रियः' यस्मात् तस्मात् ते ममात्म-भूताः प्रियाश्चेति ॥ भा. पा. १४४

इति ॥

---

1. 'सर्वभूतेषु गूढम्' (श्वे. ४–१६); 'एको देवः सर्वभूतेषु गूढः' (श्वे. ६–११).

तदेवं ज्ञेयत्वेन निर्दिष्टं निरुपाधिकम्, उपास्यत्वेन निर्दिष्टं सोपाधिकं चेत्येकमेव भगवत्तत्त्वं दृष्टिभेदात् द्वेधा प्रतीयत इति स्थितम् ॥

भगवतो लीलाविग्रहरूपं विश्वरूपं च सोपाधिकम् –

१०७. एवं लोकानुग्रहार्थं यद् गृह्यते मायामयं रूपम्

(१) अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन् ।
प्रकृतिं स्वामधिष्ठाय संभवाम्यात्ममायया ॥ ४-६.

यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥ ४-७.

परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्मसंस्थापनार्थाय संभवामि युगे युगे ॥ ४-८.

इति वर्णितम् । तदपि सोपाधिकम् ॥

तथा भक्तानुग्रहार्थम् आत्मनो योगमाहात्म्याद् यद् दर्श्यते– यथा अर्जुनाय श्रीकृष्णरूपं लीलामानुषविग्रहं तिरोधाप्य सपद्येव स्वेच्छावशात् स्वीकृतं विश्वरूपम् –

(२) पश्य मे पार्थ रूपाणि शतशोऽथ सहस्रशः ।
नानाविधानि दिव्यानि नानावर्णाकृतीनि च ॥ ११-५.

पश्यादित्यान् वसून् रुद्रानश्विनौ मरुतस्तथा ।
बहून्यदृष्टपूर्वाणि पश्याश्चर्याणि भारत ॥ ११-६.

इहैकस्थं जगत् कृत्स्नं पश्याद्य सचराचरम् ।
मम देहे गुडाकेश यच्चान्यद् द्रष्टुमिच्छसि ॥ ११-७.

इति, तदपि सोपाधिकमेव ॥[1]

भगवतः परो भावः –

१०८. तत्र भगवतो निरुपाधिकं रूपं स्वाभाविकम् । सोपाधिकं तु भक्तानामनुग्रहार्थं स्वीकृतं काचित्कम्, धर्मस्य रक्षणार्थं वा तदा तदा कञ्चित्कालं धृतम्, मायामयम्; तत्तदुपाधीनां सर्वेषामप्यविद्याकल्पित-मायाकृतत्वात् । सेयं माया प्रकृत्यपराभिधाना भगवदधीना सती तदिच्छामात्रेण तत्तदाकारेण भगवत्संबन्धित्वेनात्मानं दर्शयन्ती विपरिणमते इत्यतोऽव्ययस्वरूपस्य भगवतो न तत्संपर्कः ॥

तथा हि निरुपाधिकब्रह्मणो लोकानुग्रहार्थं प्रवर्तमानस्य या शक्तिः सा ब्रह्मैव, तथा च सविकल्पकमपि ब्रह्म स्वप्रतीत्यवस्थायामपि निर्विकल्पके एव प्रतितिष्ठतीत्युक्तं भगवता –

(१) ब्रह्मणो हि प्रतिष्ठाहममृतस्याव्ययस्य च ।
शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य च ॥ १४-२७.

इति । तत्र च भाष्यम्

---

1. अत्रार्जुनेनोपवर्णितस्य 'द्यावापृथिव्योरिदमन्तरं हि' (११-२०) इत्यादिश्लोकस्य मूलत्वेन –

अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ
दिशः श्रोत्रे वाग्विवृताश्च वेदाः ।
वायुः प्राणो हृदयं विश्वमस्य
पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा ॥ मुं. २-२-४

इति मन्त्रः सूच्यः ॥

(1) यया चेश्वरशक्त्या भक्तानुग्रहादिप्रयोजनाय ब्रह्म प्रतिष्ठते प्रवर्तते, सा शक्तिर्ब्रह्मैवाहम्; शक्तिशक्तिमतोरनन्यत्वात् इत्यभिप्रायः। अथवा ब्रह्मशब्दवाच्यत्वात् सविकल्पकं ब्रह्म; तस्य ब्रह्मणो निर्विकल्पकोऽहमेव नान्यः प्रतिष्ठा आश्रयः ॥ भा. पा. २२७.

इति ॥

यत्तु निर्विकल्पकं स्वरूपं नित्यशुद्धबुद्धमुक्तस्वभावम्, 'अक्षरादप्यक्षरम्, अव्यक्तादप्यव्यक्तम्' इत्युक्तं तत् सदा तथैवावतिष्ठत इति भगवतः 'परो भावः' इत्युच्यते ॥

(१) न तु मां शक्यसे द्रष्टुमनेनैव स्वचक्षुषा।
दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरम् ॥ ११-८.

(२) अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन्।
प्रकृतिं स्वामधिष्ठाय संभवाम्यात्ममायया ॥ ४-६.

(३) अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम्।
परं भावमजानन्तो मम भूतमहेश्वरम् ॥ ९-११

(४) (अ) परस्तस्मात्तु भावोऽन्योऽव्यक्तोऽव्यक्तात् सनातनः ॥[1] ८-२०
(आ) अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गतिम् ॥ ८-२१

(५) अव्यक्तं व्यक्तिमापन्नं मन्यन्ते मामबुद्धयः।
परं भावमजानन्तो ममाव्ययमनुत्तमम् ॥[2] ७-२४

(६) (अ) 'मूढोऽयं नाभिजानाति लोको मामजमव्ययम्' ७-२५
(आ) यो मामजमनादिं च वेत्ति लोकमहेश्वरम् ॥ १०-३

इत्यादिस्थलेषु निर्दिष्टोऽयं परो भावः ॥

---

1. 'महतः परमव्यक्तमव्यक्तात् पुरुषः परः' ॥ का. १-३-११; 'अक्षरात् परतः परः' ॥ मुं. २-१-२.

2. 'दिव्यो ह्यमूर्तः पुरुषः' ॥ मुं. २-१-२.

तदेतदभिसन्धायाचार्येण लिखितं शास्त्रप्रमुखे –

(2) स च भगवान् ज्ञानैश्वर्यशक्तिबलवीर्यतेजोभिः सदा संपन्नः, त्रिगुणात्मिकां वैष्णवीं स्वां मायां मूलप्रकृतिं वशीकृत्य, अजोऽव्ययो भूतानामीश्वरो, नित्यशुद्धबुद्धमुक्तस्वभावोऽपि सन् स्वमायया देहवानिव जात इव च लोकानुग्रहं कुर्वन् लक्ष्यते ॥ भा॰ पा॰ १

['सदा संपन्नः' इति भगवतो ज्ञानादिभिर्गुणगुणिभावेन न संबन्ध इति सूचयति ॥]

(3) स आदिकर्ता नारायणाख्यो विष्णुर्भौमस्य ब्रह्मणो ब्राह्मणत्वस्य रक्षणार्थं देवक्यां वसुदेवादंशेन कृष्णः किल संबभूव ॥ भा॰पा॰ १

['अंशेन' इति स्वरूपं निरुपाधिकं तथैव रक्षन् इति सूचयति ॥ ]

भगवतः परमगुरुत्वम् –

१०९. स च भगवान् कल्पादावेव संप्रदायप्रवर्तनार्थं सम्यग्दर्शनयोगं साधनरहस्यसहितमुपदिशति स्म। विच्छिन्ने तु संप्रदाये स्वयमेवावतीर्य स्वं परतत्त्वं तदा तदा गुणाधिकेभ्य उपदिश्य तान् अनुगृह्णाति । यदापि यथासंप्रदायं लब्धतत्त्वदर्शनाः आचार्याः स्वशिष्यानुपदिशेयुः, तदापि स उपदेशो यथा फलकारी स्यात् तथा मार्गदर्शनपूर्वकं तद्धृदये स्थित्वा ज्ञानप्रकाशेन तन्मोहम् अपसारयतीत्येवं स एव वासुदेवः परमगुरुर्वेदान्तसंप्रदायस्य ; देवर्ष्यादीनामप्यगम्यत्वाद् तदनुग्रहं विना ॥

(१) इमं विवस्वते योगं प्रोक्तवानहमव्ययम् ।
विवस्वान् मनवे प्राह मनुरिक्ष्वाकवेऽब्रवीत् ॥ ४-१.
एवं परम्पराप्राप्तमिमं राजर्षयो विदुः ॥ ४-२.

भाष्यम् – इममध्यायद्वयेनोक्तं योगं विवस्वते आदित्याय सर्गादौ प्रोक्तवान् अहं जगत्परिपालयितॄणां क्षत्रियाणां बलाधानाय। .... एवं क्षत्रियपरम्पराप्राप्तमिमं राजर्षयो राजानश्च ते ऋषयश्च राजर्षयः विदुरिमं योगम् ॥ भा. ४-१, २, पा. ६१.

(२) स एवायं मया तेऽद्य योगः प्रोक्तः पुरातनः।
भक्तोऽसि मे सखा चेति रहस्यं ह्येतदुत्तमम् ॥ ४-३.

(३) तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया।
उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः ॥ ४-३४.
यज्ज्ञात्वा न पुनर्मोहमेवं यास्यसि पाण्डव।
येन भूतान्यशेषेण द्रक्ष्यस्यात्मन्यथो मयि ॥ ४-३५.

(४) तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम्।
ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥ १०-१०.
तेषामेवानुकम्पार्थमहमज्ञानजं तमः।
नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता ॥[1] १०-११.

भाष्यम् –

(1) तेषामेव कथं नु नाम श्रेयः स्यात् इत्यनुकम्पार्थं दयाहेतोः, अहम् अज्ञानजम् अविवेकतो जातं मिथ्याप्रत्ययलक्षणं मोहान्धकारं तमः नाशयामि। आत्मभावस्थः आत्मनो भावः, अन्तःकरणाशयः; तस्मिन्नेव स्थितः सन् ज्ञानदीपेन विवेकप्रत्ययरूपेण भक्तिप्रसादस्नेहाभिषिक्तेन मद्भावनाभिनिवेशवातेरितेन ब्रह्मचर्यादिसाधनसंस्कारवत्प्रज्ञावर्तिना विरक्तान्तःकरणाधारेण विषयव्यावृत्तचित्तरागद्वेषाकलुषितनिवातापवरकस्थेन नित्यप्रवृत्तैकाग्र्यध्यानजनितसम्यग्दर्शनभास्वता ज्ञानदीपेन – इत्यर्थः ॥ भा. पा. १५२.

[ सकलसाधनैरुत्पाद्यमानोऽपि ज्ञानदीपः, भगवदनुग्रहप्राप्यः–इत्युक्तमत्र ]

---

1. तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये ॥ श्वे. ६-१८.

(५) न मे विदुः सुरगणाः प्रभवं न महर्षयः ।
अहमादिर्हि देवानां महर्षीणां च सर्वशः ॥ १०-२.
स्वयमेवाऽऽत्मनाऽऽत्मानं वेत्थ त्वं पुरुषोत्तम ।
भूतभावन भूतेश देवदेव जगत्पते ॥ १०-१५.

भाष्यम्-(2) स्वयमेव आत्मना आत्मानं वेत्थ जानासि त्वं निरतिशयज्ञानैश्वर्यबलादिशक्तिमन्तम् ईश्वरं पुरुषोत्तम । भूतानि भावयतीति भूतभावनः, हे भूतभावन ; भूतेश भूतानामीशितः ; हे देवदेव जगत्पते ॥ भा॰ पा॰ १५३.

## भगवतो जगज्जन्मादिकारणत्वं प्रकृतिद्वयद्वारेण –

११०. यदपि भगवत एव सकाशात् सर्वस्य चराचरात्मकस्य जगतः जन्मस्थितिभङ्गम्, तदपि परापरप्रकृतिद्वारेणैव न स्वतः –

(१) भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च ।
अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥ ७-४.
अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् ।
जीवभूतां महाबाहो ययेदं धार्यते जगत् ॥[1] ७-५.

अनयोः प्रकृत्योः, भगवदंशत्वेनापि व्यवहारो गीतासु । तद्यथा –

(२) विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ॥ १०-४२.

(३) ममैवांशो जीवलोके जीवभूतः सनातनः ॥ १५-७.

एते एव भगवत्प्रकृतित्वेन तदंशत्वेन च व्यपदिष्टे प्रकृतिपुरुषशब्दाभ्यामप्यभिलप्येते –

(४) प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि ॥ १३-१९.

---

1. क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः ॥ श्वे॰ १-१०.

(1) न विद्यते आदिर्ययोस्तौ अनादी । नित्येश्वरत्वादीश्वरस्य तत्प्रकृत्योरपि युक्तं नित्यत्वेन भवितुम् । प्रकृतिद्वयवत्त्वमेव हि ईश्वरस्येश्वरत्वम् ॥ भा॰ पा॰ २०७.

एतद्द्वारेणैव चेश्वरः कारणमुच्यते जगतः । यत आह –

(५) एतद्योनीनि भूतानि सर्वाणीत्युपधारय ।
अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ॥ ७–६.

भाष्यम्– (2) प्रकृतिद्वयद्वारेणाहं सर्वज्ञ ईश्वरो जगतः कारणम् इत्यर्थः ॥ पा॰ ११८.

(3) याभ्यां प्रकृतिभ्याम् ईश्वरो जगदुत्पत्तिस्थितिप्रलयहेतुः, ते द्वे अनादी सत्यौ संसारस्य कारणम् ॥ भा॰ १३–१९, पा॰ २०७.

यदापि केवलस्य भगवतः कारणत्वं निर्दिश्यते, प्रकृतेर्वा केवलायाः, तदापि भगवतः स्ववशीभूतप्रकृत्युपाधिमपेक्ष्यैव कारणत्वं न स्वतः, प्रकृतेश्च भगवत्सान्निध्यलक्षणाध्यक्ष्येणैव, न तु केवलस्य भगवतः कारणत्वम्, न वा स्वतन्त्रायाः प्रकृतेः । कार्यकारणभावस्य मायिकत्वादेव न वास्तविकत्वम् इति सिद्धान्तः –

(६) प्रकृतिं स्वामवष्टभ्य विसृजामि पुनः पुनः ।
भूतग्राममिमं कृत्स्नमवशं प्रकृतेर्वशात् ॥
न च मां तानि कर्माणि निबध्नन्ति धनञ्जय ।
उदासीनवदासीनमसक्तं तेषु कर्मसु ॥ ९–८, ९.

(७) मयाध्यक्षेण प्रकृतिः सूयते सचराचरम् ।
हेतुनानेन कौन्तेय जगद्विपरिवर्तते ॥ ९–१०.

एतच्चानुपदमेव स्पष्टीभविष्यति ॥

ब्रह्मणः प्रकृतिद्वयवत्त्वम् आविद्यकम् –

१११. यदेतदुदाहृतमधस्तात् प्रकृतिद्वयवत्त्वमीश्वरस्य, ईशितृत्वं च–तदेतदुभयमपि अविद्याकल्पितनामरूपलक्षणोपाध्याश्रयणेनैव, न तु स्वतः। तथा हि या तावत् परा प्रकृतिर्भगवतो वासुदेवस्यांश इत्युक्ता, न तस्या वास्तविकांशत्वमेव विवक्षितम्। कुत एतत्? ममैवांश इति भगवत एवांशो जीव इत्यवधारणात्, अंश एवेति चानवधारणात्, भगवता एकत्वप्रत्ययाधानार्थैवेयम् अंशत्ववाचोयुक्तिरिति गम्यते। तथा हि 'यद्गत्वा न निवर्तन्ते तद्धाम परमं मम' (१५–६) इति यच्चैतन्य-ज्योतिरात्मकं विष्णोः परमं पदं गत्वा न पुनरावर्तन्ते तदेवाव्ययं पदम् अमूढा गच्छन्ति – इत्युक्त्वा 'कथं पुनस्तद्गतानामपुनरावृत्तिः? सर्वा हि गतिरागत्यन्ता' इति शङ्कापरिहारायेदमुत्थितम् 'ममैवांशो जीव-लोके' इत्यादि। यद्यंशत्वमेव वास्तविकं विवक्षितं स्यात् न यथोक्तशङ्कापरिहृतिः स्यात्; यथा ह्येवेदानीमंशिनः परमात्मनो भ्रष्टो जीवाख्योऽशः, एवमेवांशिनं गत्वापि ततो भ्रश्येदेवेति। अत एव चात्र भाष्यम् –

(1) यथा जलसूर्यकः सूर्यांशो जलनिमित्तापाये सूर्यमेव गत्वा न निवर्तते, तेनैवात्मना संगच्छति, एवमेव; यथा वा घटाद्युपाधि-परिच्छिन्नो घटाद्याकाशः आकाशांशः सन् घटादिनिमित्तापाये आकाशं प्राप्य न निवर्तते ॥ भा. १५–७, पा. २३१

इति ॥

अपि च न केवलं ममैवेत्यवधारणसामर्थ्यादेकत्वं जीवस्य परमात्मना, किं तर्हि कण्ठरवेणैव तथात्वेनोद्घोषणात् भगवतैव –

(१) क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत ॥ १३-२

इति । अत्र हि क्षेत्रक्षेत्रज्ञसतत्त्वविवेकार्थमेवाध्यायः प्रकृत इति नान्योऽर्थः शक्यकल्पन क्षेत्रज्ञेश्वरैकत्ववाक्यस्य यथा अंशत्ववाक्यस्य प्रकरणान्तरे पठितस्य । अत एव संवन्धोक्तिरत्राचार्यस्य –

(2) सप्तमे अध्याये सूचिते द्वे प्रकृती ईश्वरस्य – त्रिगुणात्मिका अष्टधा भिन्ना अपरा, संसारहेतुत्वात् ; परा चान्या जीवभूता क्षेत्रज्ञ-लक्षणा ईश्वरात्मिका ; याभ्यां प्रकृतिभ्याम् ईश्वरो जगदुत्पत्तिस्थितिलय-हेतुत्वं प्रतिपद्यते । तत्र क्षेत्रक्षेत्रज्ञलक्षणप्रकृतिद्वयनिरूपणद्वारेण तद्वतः ईश्वरस्य तत्त्वनिर्धारणार्थं क्षेत्राध्याय आरभ्यते ॥ भा॰ पा॰ १८८–१८९.

[सप्तमे प्रकृतिद्वयोपन्यासः परमात्मैव जगतः परमं कारणमिति प्रतिपादनार्थं इत्यन्यार्थः । इह पुनरीश्वरतत्त्वनिर्धारणार्थं एव तदुपन्यास इति भावः ॥]

(3) अतीतानन्तराध्याये च 'अद्वेष्टा सर्वभूतानाम्' इत्यादिना यावदध्यायपरिसमाप्तिस्तावत् तत्त्वज्ञानिनां संन्यासिनां निष्ठा यथा ते वर्तन्त इत्येतदुक्तम् । केन पुनस्ते तत्त्वज्ञानेन युक्ता यथोक्तधर्माचरणाद् भगवतः प्रिया भवन्ति ? – इत्येवमर्थश्च अयमध्याय आरभ्यते ॥ भा॰पा॰ १८९.

[अनेनातीतानन्तराध्यायोक्तमक्षरोपासनम्, इह च क्षेत्रज्ञं चापि मां विद्धी-त्युपदिष्टं वेदनं च, न भावनामात्ररूपम् किं तु वस्तुतन्त्रमेव ज्ञानमित्युक्तं भवति ॥]

तदेवं परस्याः प्रकृतेर्भगवत्स्वरूपत्वमेव वस्तुतः न तद्व्यतिरिक्तत्वम् इत्यवगतम् । एवमेव खलु याप्यपरा प्रकृतिरीश्वरस्य, सापि व्यवहार-दृष्ट्या अनादिरेव सती न वस्तुवृत्तेन परमेश्वराद्भिन्ना, किं तर्हि माया-लक्षणैव प्रतीतिमात्रेण स्वस्याः प्रकृतित्वम् ईश्वरस्य जगदुत्पत्त्यादिहेतुत्वं

च निर्वहति । तस्याः सतत्त्वं तु भगवानेव परमार्थत ईश्वरेशितव्यादि-विभागव्यवहारातीतः[1] । यत्कारणम्

(२) दैवी ह्येषा गुणमयी मम माया दुरत्यया ।
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥[2] ७-१४.

भाष्यम् – तत्रैवं सति सर्वधर्मान् परित्यज्य मामेव मायाविनं स्वात्मभूतं सर्वात्मना ये प्रपद्यन्ते ते मायामेतां सर्वभूतमोहिनीं तरन्ति अतिक्रामन्ति । संसारबन्धनान्मुच्यन्त इत्यर्थः ॥ भा·पा· १२०.

इति प्रकृतिं मायात्वेन व्यपदिशन्, तत्तरणसामर्थ्यं च स्वभक्तानां ज्ञानिनामुपदिशन् भगवान् गुणमयीं मायाम् अविद्याध्यारोपितरूपां ज्ञापयति ; 'मम माया' इति च विष्णोः स्वभूतां तन्मात्रसतत्त्वां च ॥ एवमेव हि –

(३) न रूपमस्येह तथोपलभ्यते
नान्तो न चादिर्न च संप्रतिष्ठा ।
अश्वत्थमेनं[3] सुविरूढमूलम्
असङ्गशस्त्रेण दृढेन छित्त्वा ॥ १५-३
ततः पदं तत् परिमार्गितव्यं
यस्मिन् गता न निवर्तन्ति भूयः ।
तमेव चाद्यं पुरुषं प्रपद्ये
यतः प्रवृत्तिः प्रसृता पुराणी ॥ १५-४

[ भाष्यं चेह – ' यस्मात् पुरुषात् संसारमायावृक्षप्रवृत्तिः प्रसृता निःसृता, ऐन्द्रजालिकादिव माया, पुराणी चिरन्तनी ' (पा· २३०) – इति ॥ ]

---

1. 'भोक्ता भोग्यं प्रेरितारं च मत्त्वा सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत् ॥ ' श्वे· १-१२·
2. 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ' ॥ श्वे· ४-१०·
3. ऊर्ध्वमूलोऽवाक्शाख एषोऽश्वत्थः सनातनः ।
तदेव शुक्रं तद् ब्रह्म तदेवामृतमुच्यते ॥ का· २-३-१·

इति संसारवृक्षस्य आदिमध्यान्तराहित्यम् भगवन्तं प्रपित्सुभिरसङ्गशस्त्रेण छेद्यत्वं चोक्तं सङ्गच्छते ॥

अद्वैतब्रह्मज्ञानादेव ब्रह्मसंपत्तिः –

११२. तदेवं यस्माद् भगवत एव सकाशाद् जीवजगद्विकासः, मायाविन इव मायायाः ; तज्ज्ञानेन च तत्प्रविलयः, तस्मात् तस्मिन्नेव परमात्मनि कल्पितमिदं द्वैतं जगत् – इति गीताशास्त्रार्थं इति फलति । तदप्याह स्वयं भगवान् –

(१) यदा भूतपृथग्भावमेकस्थमनुपश्यति ।
तत एव च विस्तारं ब्रह्म संपद्यते तदा ॥ १३–३०

इति । भाष्यं चात्र भवति –

(1) यदा यस्मिन् काले भूतपृथग्भावं भूतानां पृथग्भावं पृथक्त्वम् एकस्थम् एकस्मिन्नेवात्मनि स्थितम् एकस्थम्, अनुपश्यति शास्त्राचार्योपदेशमनु आत्मानं प्रत्यक्षत्वेन पश्यति 'आत्मैवेदं सर्वम्' इति तत एव च तस्मादेव च विस्तारम् उत्पत्तिं विकासम् 'आत्मतः प्राण आत्मत आशा आत्मतः स्मर आत्मत आकाश आत्मतस्तेज आत्मत आप आत्मत आविर्भावतिरोभावौ आत्मतोऽन्नम् ....' (छां. ७–२६–१) इत्येवमादिप्रकारैर्विस्तारम् यदा पश्यति ब्रह्म संपद्यते ब्रह्मैव भवति तदा तस्मिन् काले इत्यर्थः ॥ भा. पा. २१५–२१६

इति ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यवरेण्यश्रीपूज्यपादश्रीमच्छङ्करभगवच्चरणस्मरण-
परिचयावाप्तवेदान्तप्रवेशेन श्रीबोधानन्देन्द्रसरस्वतीशिष्येण
सच्चिदानन्देन्द्रसरस्वत्याख्येन भिक्षुणा प्रणीते
गीताशास्त्रार्थविवेके भगवत्तत्त्वविवेको नाम अष्टादशोऽध्यायः

---

# १९. परमपुरुषार्थविवेकः

## मोक्षपदार्थः –

११३. अथास्मिन् शास्त्रे कः परमपुरुषार्थो विवक्षित इति विवेचनीयम्, स च केन साधनेन प्राप्यत इति च। तत्र परमपुरुषार्थस्तावत् अमृताख्यो ब्रह्मज्ञानेन प्राप्यत इति विस्पष्टं प्रतिज्ञातं भगवता–

(१) ज्ञेयं यत्तत् प्रवक्ष्यामि यज्ज्ञात्वाऽमृतमश्नुते।
अनादिमत् परं ब्रह्म न सत्तन्नासदुच्यते ॥ १३-१२

इति। तदेतदमृतम्, 'अमृतत्वम्' (२–१५); 'अनामयं पदम्' (२-५१); 'शान्तिः' (२-७०, ७१); 'परा शान्तिः' (४-३९, ५–२९, १२–१२, १८–६२); 'परा सिद्धिः', 'परमा संसिद्धिः' (८–१५, १४–१); 'मुक्तिः', 'मोक्षः' (५–२८, १७–२५, १८–३०) इति विविधैरभिधानैर्निर्दिष्टमत्र ॥

## द्विविधो मोक्षः –

११४. यद्यपि जीवस्य स्वाभाविको ब्रह्मात्मभावो ज्ञानेनाभिव्यज्यत इति सद्य एव मोक्षोऽविद्याकृताद् बन्धाद् भवत्येव (खं. ९१), तथाप्येवं मुक्तानां पुनः शरीरग्रहणं नास्तीति कृत्वा विदेहमोक्षोऽप्युपदिश्यते वेदान्तेष्विवात्रापि। स च मोक्षः, 'ब्रह्मनिर्वाणम्' (२–७२, ५–२४, २५, २६); 'परा गतिः'(६–४५, १३–२८) 'शाश्वतं पदम्', 'शाश्वतं स्थानम्' (१८-५६, ६२) – इत्याद्यभिधानैर्निर्दिष्टोऽत्र। तामेतां विदेहमुक्तिम् उपासनेनापि लभ्यां प्रकारान्तरेणापि

परामृशति भगवान् 'माम् एति' (४–९), 'मम साधर्म्यमागताः' (१४–२), 'मद्भावं याति' (८–५), 'यान्ति माम्' (७–२३), 'निवसिष्यसि मय्येव' (१२–८) – इत्यदिस्थलेषु, 'न स भूयोऽभिजायते' (१३–२३), 'अतितरन्त्येव मृत्युम्' (१३–२५), 'यान्ति ते परम्' (१३–३४) – इत्यादिषु च । द्वावपीमौ मोक्षौ युगपत् परामृष्टौ क्वचित् तत्र तत्र । तद्यथा –

(१) योऽन्तःसुखोऽन्तरारामस्तथान्तर्ज्योतिरेव यः ।
स योगी ब्रह्मनिर्वाणं ब्रह्मभूतोऽधिगच्छति ॥[1] ५–२४.

भाष्यम्–(1) योऽन्तःसुखः । अन्तरात्मनि सुखं यस्य सोऽन्तःसुखः । तथा अन्तरेवात्मनि आरामः आरमणं क्रीडा यस्य सोऽन्तरारामः । तथैव अन्तरेव आत्मन्येव ज्योतिः प्रकाशः यस्य सोऽन्तर्ज्योतिरेव । य ईदृशः स योगी ब्रह्मनिर्वाणं ब्रह्मणि निर्वृतिं मोक्षं इह जीवन्नेव ब्रह्मभूतः सन् अधिगच्छति प्राप्नोति ॥ भा. पा. ९५.

सद्योमुक्तिः –

११५. पुनरावृत्तिरहितपरमपदप्राप्तेः पूर्वं तत्त्वज्ञानाद् या परमार्थस्वात्मन्यवस्थितिः सा **सद्योमुक्तिः**, ज्ञानसमकालमेव प्राप्यत्वात्; जीवन्मुक्तिश्च, जीवत एव ज्ञानिनः सिद्धेति । सैव 'स्थितप्रज्ञता'(२–५४....); 'ब्राह्मी स्थितिः'(२–७२); 'नैष्कर्म्यम्', 'सिद्धिः', 'नैष्कर्म्यसिद्धिः'(३–४, १८–४९); 'ब्रह्मभावः'(५–२४, ६–२७, १८–५०); 'युक्तता'(६–८, १४, १८); 'अशुभान्मोक्षः' (४–१६, ९–१); 'मायातरणम्'(७–१४); 'एकभक्तिता'(७–१७);

1. 'ब्रह्मैव सन् ब्रह्माप्येति' ॥ बृ. ४–४–६.

'परा भक्तिलाभः'(१८–५५); 'गुणातीतता'(१४–२५); 'ब्रह्मसंपत्तिः' (१३–३०) – इति च बहुधा गीयते । ईदृशीं जीवन्मुक्तिं प्राप्ता एव तत्त्वदर्शिनो यैः उपदिष्टं ज्ञानं मोहापासरणदक्षं भवेदित्युक्तम् चतुर्थे (४–३४, ३५) ॥

मुक्त्यभिधायकाः शब्दाः –

११६. तत्र ब्रह्मनिर्वाणामृतत्वशान्तिसंसिद्ध्यादिशब्दाः केचिन्मुख्यं मोक्षं जीवन्मुक्तिशब्दवाच्यम्, गौणं चापुनरावृत्तिलक्षणम् अभिदधाना दृश्यन्तेऽत्र –

(१) कामक्रोधवियुक्तानां यतीनां यतचेतसाम् ।
अभितो ब्रह्मनिर्वाणं वर्तते विदितात्मनाम् ॥ ५–२६.

भाष्यम् (1) – अभितः उभयतः – जीवतां मृतानां च ब्रह्मनिर्वाणं मोक्षो वर्तते विदितात्मनाम् । विदितः ज्ञातः आत्मा येषां ते विदितात्मानः । तेषां विदितात्मनाम् । सम्यग्दर्शिनामित्यर्थः ॥ भा. पा. ९६.

[अत्र जीवतां मृतानां च इत्युभयविधस्यापि मोक्षस्य परामर्शः ॥]

(२) भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम् ।
सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति ॥ ५–२९.

भाष्यम् – सुहृदं सर्वभूतानां सर्वप्राणिनां प्रत्युपकारनिरपेक्षतया उपकारिणं सर्वभूतानां हृदये शयं सर्वकर्मफलाध्यक्षं सर्वप्रत्ययसाक्षिणं मां नारायणं ज्ञात्वा शांतिं सर्वसंसारोपरतिम् ऋच्छति प्राप्नोति ॥ भा.पा.९७.

[अत्र शान्तिशब्द उभयविधमोक्षवाचकः ॥]

(३) यतेन्द्रियमनोबुद्धिर्मुनिर्मोक्षपरायणः ।
विगतेच्छाभयक्रोधो यः सदा मुक्त एव सः ॥ ५–२८.

[अत्र मुक्तिरित्युभयविधमोक्षाभिधानम् ॥]

क्रममुक्तिः –

११७. ज्ञानसमकालं प्राप्यैव सद्योमुक्तिर्नामेत्यवोचाम । सा चेयं कर्मयोगादिप्राप्यक्रममुक्तिविलक्षणा । असौ हि क्रममुक्तिः सत्त्वशुद्ध्यादिक्रमेणैव ज्ञानप्राप्त्या लभ्या, उपासनाबलतो लोकान्तरं प्राप्य तत्रैव ज्ञानप्राप्त्या च – इति द्वेधा । तत्र प्रथमप्रकारा

(१) यतेन्द्रियमनोबुद्धिर्मुनिर्मोक्षपरायणः ।
विगतेच्छाभयक्रोधो यः सदा मुक्त एव सः ॥ ५-२८

इति श्लोकावतरणिकाभाष्ये निर्दिष्टा –

(1) सम्यग्दर्शननिष्ठानां संन्यासिनां सद्योमुक्तिरुक्ता । कर्मयोगश्च ईश्वरार्पितसर्वभावेन ईश्वरे ब्रह्मण्याधाय (५-१०) क्रियमाणः सत्त्वशुद्धिज्ञानप्राप्तिसर्वकर्मसंन्यासक्रमेण मोक्षाय इति भगवान् पदे पदे अब्रवीत्, वक्ष्यति च ॥ भा. पा. ९६.

इति । द्वितीयप्रकारा तु –

(२) अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् ।
तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः ॥[1] ८-२४

इत्यत्रोक्ता । तत्र हि भाष्यम् –

(2) तत्र तस्मिन् मार्गे प्रयाता मृता गच्छन्ति ब्रह्म ब्रह्मविदो ब्रह्मोपासका ब्रह्मोपासनपरा जनाः । 'क्रमेण' इति वाक्यशेषः । न हि

---

1. तेऽर्चिषमभिसंभवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान् षडुदङ्ङेति मासांस्तान् । मासेभ्यः संवत्सरꣳ संवत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयत्येष देवयानः पन्थाः ॥ छां. ५-१०-१,२.

ब्रह्मलोकमभिसंपद्यते न च पुनरावर्तते न च पुनरावर्तते ॥ छां. ८-१५-१.

सद्योमुक्तिभाजां सम्यग्दर्शननिष्ठानां गतिरागतिर्वा क्वचिदस्ति । 'न तस्य प्राणा उत्क्रामन्ति' इति श्रुतेः । ब्रह्मसँल्लीनप्राणा एव ते· ब्रह्ममया ब्रह्मभूता एव ते ॥ भा· पा· १३४

इति ॥

[सद्योमुक्तिशब्देन सम्यग्दर्शनबलादिहैव ब्रह्मप्राप्तिर्भाष्यकृदभिप्रेतेत्यत्रेदं भाष्यवचनं प्रमाणम् । अतो नात्र मण्डनादिमतं शङ्कनीयम् ॥ ]

अत्रैषा शङ्का समुन्मिषेत् –

(२) आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन ।
मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते ॥ ८–१६

इत्युक्तमस्मिन्नेवाध्याये । तत्र च भाष्ये व्याख्यातम् –

(3) आब्रह्मभुवनात् सह ब्रह्मभुवनेन लोकाः सर्वे पुनरावर्तिनः पुनरावर्तनस्वभावाः ॥ भा· पा· १३२

इति । इह तु अर्च्यादिमार्गेण ब्रह्मलोकं गतानामेव अनावृत्तिः स्मर्यते 'एकया यात्यनावृत्तिम्' इति । तत्कथमेतत् सङ्गमनीयम् इति । अत्रोच्यते । ब्रह्मोपासकाः ब्रह्मक्रतुत्वाद् ब्रह्मलोकं गत्वा तत्रैव प्राप्तसम्यग्दर्शनाः, ब्रह्मणा सहैव मुच्यन्ते । यथोक्तं सूत्रभाष्ये –

(4) ननु कार्यप्राप्तौ अनावृत्तिश्रवणं न घटते । न हि परस्माद् ब्रह्मणोऽन्यत्र क्वचिन्नित्यतां संभावयन्ति । .... अत्र ब्रूमः – कार्यब्रह्मलोकप्रलयप्रत्युपस्थाने सति तत्रैवोत्पन्नसम्यग्दर्शनाः सन्तः, तदध्यक्षेण हिरण्यगर्भेण सह, अतः परं परिशुद्धं विष्णोः परमं पदं प्रतिपद्यन्त इति । इत्थं क्रममुक्तिः, अनावृत्त्यादिश्रुत्यभिधानेभ्योऽभ्युपगन्तव्या ॥
सू· भा· ४–३–९, १०, पा· ४९५, ४९६·

एवं च जीवानां साधनसोपानक्रमेणेहैव वा, उपासकानां ब्रह्मसाक्षात्कारपूर्वकं मृतानाम् अर्च्यादिदेवताप्राप्तिक्रमेण ब्रह्मलोकं गतानां तत्रैव सम्यग्ज्ञानप्राप्तिक्रमेण वा, मुक्तिरित्यविरोधो द्रष्टव्यः

'भोक्तारं यज्ञतपसाम्' (५–२९) इति श्लोकभाष्ये तु –

(5) एवं समाहितचित्तेन किं विज्ञेयमिति ? उच्यते - भोक्तारं यज्ञतपसाम् यज्ञानां तपसां च कर्तृरूपेण देवतारूपेण च ; सर्वलोकमहेश्वरम्, सर्वेषां लोकानां महान्तमीश्वरम् ; सुहृदं सर्वभूतानां सर्वप्राणिनां प्रत्युपकारनिरपेक्षतया उपकारिणं सर्वभूतानां हृदयेशय सर्वकर्मफलाध्यक्षं सर्वप्रत्ययसाक्षिणं मां नारायणं ज्ञात्वा शान्ति सर्वसंसारोपरतिम् ऋच्छति प्राप्नोति ॥ भा॰ पा॰ ९७

इत्युक्तम् । तत्र च 'कर्तृरूपेण देवतारूपेण च' इत्यनेन तत्तद्रूपेण भोक्ता भगवानेवेत्युक्त्या कर्तृत्वसंप्रदानकारकत्वलक्षणम् उपाधिद्वयम् उपमृदितम् ; 'सर्वलोकमहेश्वरम्' इत्यनेन देवर्षिमनुष्यादिसर्वनियन्तृत्वोक्त्या तादृशः सर्वोऽप्युपाधिरुपमृदितः ; 'सर्वप्रत्ययसाक्षिणं मां ज्ञात्वा' इत्यनेन कर्तृभोक्तृफलाध्यक्षविभागं नियन्तृनियम्यविभागं चाविद्याकृतं सर्वं सर्वसाक्ष्यभेदज्ञानेनोपमृद्य तत एव च साक्षित्वमप्याविद्यकमिति ज्ञात्वा शान्तिमृच्छतीति सद्योमुक्तिरेवोक्तेत्यवधेयम् । एवं च निदिध्यासनलक्षणस्य षष्ठाध्यायोक्तस्य ध्यानस्यापि ज्ञानद्वारेणैव मुक्तिहेतुत्वमुक्तं भवतीति च ॥

तदेवमधिकारितारतम्येनेह वा परत्र वा परमात्मज्ञानात् परमात्मात्मनाऽवस्थानलक्षणः परमपुरुषार्थ इति शास्त्रार्थः ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यवरेण्यश्रीपूज्यपादश्रीमच्छङ्करभगवच्चरणस्मरण-
परिचयावाप्तवेदान्तप्रवेशेन श्रीबोधानन्देन्द्रसरस्वतीशिष्येण
सच्चिदानन्देन्द्रसरस्वत्याख्येन भिक्षुणा प्रणीते
गीताशास्त्रार्थविवेके परमपुरुषार्थविवेको नाम एकोनविंशोऽध्यायः

---

# २०. शास्त्रार्थोपसंहारः

## शास्त्रप्रतिपाद्यविषयः –

११८. अथ शास्त्रोपदेश एकत्र पुञ्जीकृत्योपसंहर्तव्यो जिज्ञासूनां सुखावबोधार्थम् । तत्र द्विप्रकारो धर्मो निःश्रेयसप्रयोजनः, वासुदेवाख्यं परं ब्रह्म च शास्त्रप्रतिपाद्यो विषयः – इत्युक्तमुपक्रमे । तत्रापि प्रवृत्तिधर्मो निवृत्तिधर्मोपायभूतः, मुख्यतस्तु निवृत्तिधर्म एव साक्षान्निःश्रेयसप्रयोजन इति चोक्तम् ॥

## शास्त्रप्रतिपाद्यो योगः –

११९. अत्र च ज्ञाननिष्ठालक्षणः ससंन्यासः कर्मयोगाद्युपायो मुख्यतो योग इत्युच्यते । तत्रोपेयभूत उपायभूतश्च योगो भगवत्संबन्धेनैव योग इत्युच्यते । उपायभूतश्च योगः कर्मयोगो ध्यानयोगश्च यथानुक्रमं ब्रह्मज्ञानस्य बहिरङ्गमन्तरङ्गं चेति ज्ञेयम् । तदेतदुभयमपि साधनं भगवन्तमुद्दिश्यैव क्रियत इति सामान्येन भक्तियोगशब्दवाच्यम्, विशिष्य च कर्मप्रधानतया 'कर्मयोगः' इति, ध्यानप्रधानतया 'ध्यानयोगः' इति चोच्यते । तदेतन्निष्ठाद्वयमपि योगनिष्ठाज्ञाननिष्ठाभिधानमुपसंहृतं शास्त्रान्ते –

(१) मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।
मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे ॥ १८-६५.

इति योगनिष्ठोपसंहारः । अत्र हि 'मद्याजी' इति कर्मयोगः, 'मद्भक्तः' इति भक्तियोगः, 'मन्मनाः' इति च ध्यानयोगः – इति योगावान्तरभेदास्त्रयोऽप्युल्लिखिताः । सर्वोऽप्ययं योगो भगवदेकसंबद्ध इति योगशब्दार्हः । यथोक्तं भाष्यकृता –

(1) एवं वर्तमानो वासुदेवे एव समर्पितसाध्यसाधनप्रयोजनो मामेवैष्यसि आगमिष्यसि। सत्यं ते तव प्रतिजाने सत्यां प्रतिज्ञां करोमि एतस्मिन् वस्तुनि – इत्यर्थः। यतः प्रियोऽसि मे। एवं भगवतः सत्यप्रतिज्ञत्वं बुद्ध्वा भगवद्भक्तेरवश्यंभावि मोक्षफलम् अवधार्य भगवच्छरणैकपरायणो भवेदिति वाक्यार्थः॥ भा. पा. २८८

इति॥

[अत्र वासुदेवे 'समर्पितसाध्यसाधनप्रयोजनः' इति प्रवृत्तिधर्मस्यापि भगवदर्थं कृतस्य निवृत्तिधर्मरसविद्धत्वं यथा स्यात् तथा सूचितम्॥]

अथ ज्ञाननिष्ठोपसंहारः –

(२) सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज।
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः॥ १८–६६

इति। अत्र हि 'सर्वधर्मान् परित्यज्य' – इति सर्वकर्मसंन्यास उपदिष्टः। 'मामेकं शरणं व्रज' इति च परभक्तिशब्दवाच्या ज्ञाननिष्ठा। भाष्यं चात्र –

(2) धर्मशब्देनात्र अधर्मोऽपि गृह्यते। नैष्कर्म्यस्य विवक्षितत्वात्। 'नाविरतो दुश्चरितात्' (क. १–२–२४), 'त्यज धर्ममधर्मं च' (शां. ३२९–४०) इत्यादिश्रुतिस्मृतिभ्यः। सर्वधर्मान् परित्यज्य, संन्यस्य सर्वकर्माणि – इत्येतत्। मामेकं सर्वात्मानं समं सर्वभूतस्थम् ईश्वरमच्युतं गर्भजन्मजरामरणविवर्जितम्, 'अहमेव' इत्येवं शरणं व्रज। 'न मत्तोऽन्यदस्ति' इत्यवधारय – इत्यर्थः। अहं त्वा त्वाम् एवं निश्चितबुद्धिं सर्वपापेभ्यः सर्वधर्माधर्मबन्धनरूपेभ्यः, मोक्षयिष्यामि स्वात्मभावप्रकाशीकरणेन। उक्तं च 'नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता' (१०–११) इति। अतो मा शुचः। शोकं मा कार्षीः – इत्यर्थः॥ भा. पा. २८८.

अत्र यत् प्रागेवोक्तम् –

(१) दैवी ह्येषा गुणमयी मम माया दुरत्यया ।
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥ ७-१४

इति, तदिहाप्यनुसंधेयम् । लिखितं हि तत्र भाष्ये –

"तत्रैवं सति सर्वधर्मान् परित्यज्य मामेव मायाविनं स्वात्मभूतं सर्वात्मना ये प्रपद्यन्ते, ते मायामेतां सर्वभूतमोहिनीं तरन्ति, अतिक्रामन्ति । संसारबन्धनात् मुच्यन्ते इत्यर्थः ॥" भा. पा. १२०

इति ॥

१२०. अस्मिन् शास्त्रे भगवद्भक्ता एव विशिष्याधिक्रियन्ते इत्यपि भगवतैवोपसंहारे प्रोक्तम् –

(१) इदं ते नातपस्काय नाभक्ताय[1] कदाचन ।
न चाशुश्रूषवे वाच्यं न च मां योऽभ्यसूयति ॥ १८-६७

इति । अत्र भाष्यम् –

"भगवति अनसूयायुक्ताय तपस्विने भक्ताय शुश्रूषवे च वाच्यं शास्त्रम् इति सामर्थ्याद् गम्यते । तत्र 'मेधाविने तपस्विने वा' (यास्क. २-१-६) इत्यनयोर्विकल्पदर्शनात् शुश्रूषाभक्तियुक्ताय तपस्विने, तद्युक्ताय मेधाविने वा वाच्यम् ; शुश्रूषाभक्तिवियुक्ताय न तपस्विने नापि मेधाविने वाच्यम् ; भगवति असूयायुक्ताय समस्तगुणवतेऽपि न वाच्यम् ; गुरुशुश्रूषाभक्तिमते च वाच्यम् – इत्येष शास्त्रसंप्रदायविधिः ॥ भा. पा. २९६.

(२) य इमं परमं गुह्यं मद्भक्तेष्वभिधास्यति ।
भक्तिं मयि परां कृत्वा मामेवैष्यत्यसंशयः ॥ १८-६८.

---

1. यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥ श्वे. ६-२३.

भाष्यम् – भक्तेः पुनर्ग्रहणाद् भक्तिमात्रेण केवलेन शास्त्रसंप्रदाने पात्रं भवतीति गम्यते । कथमभिधास्यतीति ? उच्यते – भक्तिं मयि परां कृत्वा 'भगवतः परमगुरोः अच्युतस्य शुश्रूषा मया क्रियते' इत्येवं कृत्वा इत्यर्थः ॥ भा. पा. २९७.

१२१. शास्त्राध्ययनश्रवणयोः फलं त्वित्थम् उपसंहृतमत्र –

(१) अध्येष्यते च य इमं धर्म्यं संवादमावयोः ।
ज्ञानयज्ञेन तेनाहमिष्टः स्यामिति मे मतिः ॥ १८-७०.

अत्र ज्ञानयज्ञेन इति नात्मज्ञानं विवक्षितम् । केवलाध्ययनेन तत्प्राप्त्य-संभवात् । अत एव भाष्यम् –

"ज्ञानयज्ञेन । विधिजपोपांशुमानसानां यज्ञानां ज्ञानयज्ञो मानसत्वाद् विशिष्टतमः – इत्यतस्तेन ज्ञानयज्ञेन गीताशास्त्रस्याध्ययनं स्तूयते । फलविधिरेव वा देवतादिविषयज्ञानयज्ञफलतुल्यं तस्य फलं भवतीति ॥" भा. पा. २९७

इति ॥

(२) श्रद्धावाननसूयश्च शृणुयादपि यो नरः ।
सोऽपि मुक्तः शुभाँल्लोकान् प्राप्नुयात् पुण्यकर्मणाम् ॥ १८-७१

इदं तु सामान्याधिकारिणाम् । मुख्याधिकारिणां त्विदमुच्यते –

(३) कच्चिदेतत् श्रुतं पार्थ त्वयैकाग्रेण चेतसा ।
कच्चिदज्ञानसंमोहः प्रणष्टस्ते धनञ्जय ॥ १८-७२.

अत्र श्रवणं मुख्याधिकारिकृतम् । अत एव हि भाष्यम् –

"श्रुतम् श्रवणेनावधारितम् । पार्थ, त्वया एकाग्रेण चेतसा चित्तेन ; किं वा प्रमादतः । कच्चिदज्ञानसंमोहः, अज्ञाननिमित्तः सम्मोहः विचित्तभावः, अविवेकः स्वाभाविकः किं प्रणष्टः ?– यदर्थोऽयं शास्त्रश्रवणायासस्तव, मम चोपदेष्टृत्वायासः, प्रवृत्तः – ते तव धनञ्जय ॥" भा. पा. २९८

इति । अर्जुनस्य प्रतिवचनं च –

नष्टो मोहः स्मृतिर्लब्धा त्वत्प्रसादान्मयाऽच्युत ।
स्थितोऽस्मि गतसन्देहः करिष्ये वचनं तव ॥ १८-७३

इति । अत्र भाष्यम् —

नष्टो मोहः अज्ञानजः समस्तसंसारानर्थहेतुः सागर इव दुस्तरः । स्मृतिश्च आत्मतत्त्वविषया लब्धा, यस्या लाभात् सर्वग्रन्थीनां विप्रमोक्षः, त्वत्प्रसादात् तव प्रसादात् मया त्वत्प्रसादमाश्रितेन, अच्युत ॥ भा. पा. २९८

इति ॥

प्रश्नप्रतिवचनाभ्यामिदमवगम्यते यन्मोहापसारणमेव शास्त्रस्य दृष्टं परमं फलमिति । तदिदमुक्तमादावेवास्माभिः भगवत्पादभाष्यमनुसृत्य शोकमोहविच्छेदार्थमेव गीताशास्त्रप्रवृत्तिः, स च विच्छेदः सर्वकर्मसंन्यासपूर्वकादात्मज्ञाननिष्ठारूपाद् धर्माद् भवतीति ( खं ८) । तदेवात्र शास्त्रार्थोपसंहारविवेचनेऽप्युक्तम्, गीताशास्त्रश्रवणेन परमपुरुषार्थ एव लभ्यत इत्युपपादनार्थम् । अत एव हि वाक्यशेषे भाष्यम्

"अनेन मोहनाशप्रश्नप्रतिवचनेन सर्वशास्त्रार्थज्ञानफलमेतावदेवेति निश्चितं दर्शितं भवति, यतः ज्ञानान्मोहनाशः, आत्मस्मृतिलाभश्चेति ॥ भा. पा. २९८

इति । तदनेन गीताशास्त्रार्थविवेकेन यथामति कृतेन प्रीयतां भगवान् नारायणः यत्प्रसादात् गीताशास्त्रार्थावधारणं कृत्वा कृतकृत्याः स्युर्मुमुक्षवः — इति संप्रार्थ्य उपसंह्रियते प्रकरणमिदमिति शिवम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यवरेण्यश्रीपूज्यपादश्रीमच्छङ्करभगवच्चरणस्मरण-
परिचयावाप्तवेदान्तप्रवेशेन श्रीबोधानन्देन्द्रसरस्वतीशिष्येण
सच्चिदानन्देन्द्रसरस्वत्याख्येन भिक्षुणा प्रणीते
गीताशास्त्रार्थविवेके शास्त्रार्थोपसंहारो नाम विंशतितमोऽध्यायः

---

# अथ गीताशास्त्रार्थविवेकपरिशिष्टे

—§0§—

## २१. साङ्ख्यदर्शनोपसंग्रहः

**ग्रन्थसंबन्धः –**

१२२. यद्यप्यस्मिन् शास्त्रे साङ्ख्ययोगशब्दौ प्राधान्येन श्रौतसाङ्ख्ययोगावेवाधिकृत्य प्रवृत्तौ, तथापि साङ्ख्ययोगदर्शनयोरप्यत्र यावद्वेदान्तसिद्धान्ताविरोधः, यावच्च तत्र स्वीकृतयुक्तीनां दृष्टानुसारित्वाद् वेदान्तार्थोपबृंहकत्वम्, तावत् परिग्रहोऽत्र क्रियत एव, 'परमतमप्रतिषिद्धम् अनुमतं भवति' इति न्यायमनुसृत्य इत्यवोचाम (खं. ११)। अत एव शारीरकभाष्ये साङ्ख्ययोगदर्शनयोः प्रत्याख्यानप्रसङ्गेन तत्रभवता भाष्यकारेणैवमुपसंहृतम् –

(१) सतीष्वपि अध्यात्मविषयासु बह्वीषु स्मृतिषु साङ्ख्ययोगस्मृत्योरेव निराकरणे यत्नः कृतः। साङ्ख्ययोगौ हि परमपुरुषार्थसाधनत्वेन लोके प्रख्यातौ, शिष्टैश्च परिगृहीतौ, लिङ्गेन च श्रौतेन उपबृंहितौ – 'तत्कारणं साङ्ख्ययोगाभिपन्नं ज्ञात्वा देवं मुच्यते सर्वपाशैः' (श्वे. ६-१३) इति। निराकरणं तु न साङ्ख्यज्ञानेन वेदनिरपेक्षेण योगमार्गेण वा निःश्रेयसम् अधिगम्यत इति। श्रुतिर्हि वैदिकात् आत्मैकत्वविज्ञानात् अन्यन्निःश्रेयससाधनं वारयति 'तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' (श्वे. ३-८) इति। द्वैतिनो हि ते साङ्ख्या योगाश्च

नात्मैकत्वदर्शिनः । यत्तु दर्शनमुक्तम् 'तत्कारणं साङ्ख्ययोगाभिपन्नम्' इति, वैदिकमेव तत्र ज्ञानं ध्यानं च साङ्ख्ययोगशब्दाभ्याम् अभिलप्यते, प्रत्यासत्तेः – इत्यवगन्तव्यम् ॥ सू. भा. २-१-३, पा. १८३.

इति ॥

अत्र विशिष्य आत्मैकत्वदर्शनेन यत्र विरोधः तत्र दर्शने एते न परिगृह्येते – इत्युक्तम् । गीतास्वपि वेदान्तदर्शनमेवानुसृतम्, 'वेदैश्च सर्वैरहमेव वेद्यो । वेदान्तकृद् वेदविदेव चाहम्' (१५-१५) इत्युद्घोषयता भगवता । उपबृंहितं चात्मैकत्वम्, 'क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत' (१३-२) इति, 'सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि । ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः' (६-२९) इति च । अतः समानमेवात्राप्येतस्मिन्नंशे साङ्ख्ययोगयोरनादरणम् ॥

परिग्राह्यांशमप्याह तत्रैव भाष्यकृत् –

(२) येन त्वंशेन न विरुध्येते, तेन इष्टमेव सांख्ययोगस्मृत्योः सावकाशत्वम् । तद् यथा – 'असङ्गो ह्ययं पुरुषः' (बृ. ४-३-१६), इत्येवमादिश्रुतिप्रसिद्धमेव पुरुषस्य विशुद्धत्वं निर्गुणपुरुषनिरूपणेन सांख्यैरभ्युपगम्यते । तथा च योगैरपि 'अथ परिव्राड्विवर्णवासा मुण्डोऽपरिग्रहः' (जा. ५) इत्येवमादिश्रुतिप्रसिद्धमेव निवृत्तिनिष्ठत्वं प्रव्रज्याद्युपदेशेन अनुगम्यते ॥ सू. भा. २-१-३, पा. १८४.

अत्र च भाष्ये सांख्ययोगदर्शनयोः स्मृतित्वेनैव व्यपदेशः, श्रुत्यविरोधे परिग्राह्यत्वसूचनाय । 'विरोधे त्वनपेक्षं स्यादसति ह्यनुमानम्' (जै. सू. १-३-३) इति मीमांसान्यायानुसारेण इति गम्यते ॥

तदेवमनेन विचारसन्दर्भेण सांख्ययोगदर्शनगता अप्युपदेशाः केचिदत्र शास्त्रे विषयविवेचनार्थम् उपसंगृहीता इत्यवगमितं भवति ।

तदत्र के के उपदेशाः कियत्यंशे एताभ्यां दर्शनाभ्याम् उपसंगृहीताः गीताशास्त्रे इति विवेक्तव्यं भवतीति तत्प्रदर्शनार्थमत्र प्रयत्नः क्रियते। तत्र सांख्यदर्शनोपसंग्रहांश एव तावत् प्रदर्श्यते ॥

मोक्षविषये संग्राह्याः सांख्याभ्युपगमाः –

१२३. तत्र सांख्या आहुः –

दृष्टवदानुश्रविकः स ह्यविशुद्धिक्षयातिशययुक्तः।
तद्विपरीतः श्रेयान् व्यक्ताव्यक्तज्ञविज्ञानात् ॥ २ ॥

आनुश्रविकोऽपि कर्मकलापः अविशुद्धियुक्तः, पशुघातात्; क्षययुक्तः, इन्द्रस्थानादेरपि प्रच्युतिस्मरणात्; अतिशययुक्तश्च निरतिशयफलवत्त्वानवगमात्; तद्विपरीतस्तु अविशुद्ध्याद्यभाववान्, व्यक्ताव्यक्तयोः ज्ञस्य च विवेकः श्रेयान् मोक्षकारणम् इत्युक्तमत्र ॥

अत्र यद्यपि प्रकृतिपुरुषविवेको मोक्षकारणम् परमार्थज्ञानत्वात् इतीहापि शास्त्रे अनुमन्यते

(१) क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत्तज्ज्ञानं मतं मम ॥ १३-२

(२) इति क्षेत्रं तथा ज्ञानं ज्ञेयं चोक्तं समासतः।
मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते ॥ १३-१८

इति; काम्यकर्मनिन्दा च क्रियते श्रेयःसाधनज्ञानस्तुत्यर्थम् –

(३) ते तं भुक्त्वा स्वर्गलोकं विशालं
क्षीणे पुण्ये मर्त्यलोकं विशन्ति।
एवं त्रयीधर्ममनुप्रपन्ना
गतागतं कामकामा लभन्ते ॥ ९-२१

इत्यादिना, तथापि यज्ञादीनामविशुद्धत्वं नैव भगवतो मतम् –

(४) त्याज्यं दोषवदित्येके कर्म प्राहुर्मनीषिणः ॥ १८-३

इति परमतमनूद्य –

(५) यज्ञो दानं तपः कर्म न त्याज्यं कार्यमेव तत् ।
यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् ॥ १८-५.

इति पावनत्वेन तेनैवोल्लिख्य प्रशंसापूर्वकं कार्यत्वोपदेशात् ॥

(६) स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ॥ १८-४६

इति च ज्ञाननिष्ठायोग्यत्वप्राप्तये साधनत्वेनोपदेशाच्च ॥

प्रकृतिपुरुषसंयोगगताः साङ्ख्याभ्युपगमाः संग्राह्याः –

१२४. एवं प्रकृतिपुरुषसंयोगः सृष्टिहेतुः भवतीति सांख्याः –

तस्मात् तत्संयोगादचेतनं चेतनावदिव लिङ्गम् ।
गुणकर्तृत्वे च तथा कर्तेव भवत्युदासीनः ॥ २० ॥
पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य ।
पङ्ग्वन्धवदुभयोरपि संयोगस्तत्कृतः सर्गः ॥ २१ ॥

पुरुषसंयोगात् महदादिलिङ्गं चेतनावदिव भवति । पुरुषश्च उदासीनोऽपि गुणकर्तृत्वे कर्तेव भवतीत्याहुः । प्रकृतिपुरुषसंयोगः पुरुषस्य दर्शनार्थं दुःखत्रयं चाभिमन्यमानस्य तस्य विवेकद्वारा कैवल्यार्थं च भवतीति चाहुः ॥

गीतास्वपि –

(१) यावत् सञ्जायते किञ्चित् सत्त्वं स्थावरजङ्गमम् ।
क्षेत्रक्षेत्रज्ञसंयोगात् तद्विद्धि भरतर्षभ ॥ १३-२६

इति संयोगस्य सृष्टिहेतुत्वमुच्यते ।

(२) क्षेत्रक्षेत्रज्ञयोरेवमन्तरं ज्ञानचक्षुषा ।
भूतप्रकृतिमोक्षं च ये विदुर्यान्ति ते परम् ॥ १३-३४.

इति क्षेत्रक्षेत्रज्ञविवेकस्य कैवल्यार्थत्वं च । तत्र संयोगः संनिधिमात्रमिष्यते सांख्यैः ; गीताशास्त्रे तु आध्यासिकः इति यथोदाहृतश्लोकभाष्यावलोकनात् स्फुटं भवति ॥

## क्षेत्रापरसंज्ञकप्रकृतिविवरणे संग्राह्यांशः –

१२५. प्रकृतिर्व्यक्ताव्यक्तरूपेण द्विविधा, पुरुषस्तु एकरूप एव । तयोर्विवेकज्ञानान्निःश्रेयसम् इति सांख्याः । तत्रैवं प्रकृतिविभागः –

मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त ।
षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः ॥ ३ ॥

[ मूलप्रकृतिः-अव्यक्तम् ; महान् – बुद्धिः, अहङ्कारः, पञ्चतन्मात्राणि – इति सप्त प्रकृतिविकृतयः ; बुद्धीन्द्रियाणि पञ्च, कर्मेन्द्रियाणि पञ्च, मनः, पञ्चमहाभूतानि – इति षोडश विकाराः ; पुरुषस्तु न प्रकृतिः, नापि विकृतिः – इति तत्त्वविभागः ॥ ]

गीताशास्त्रेऽपि क्षेत्रम् एवं विवृतम् –

(१) महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च ।
इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचराः ॥ १३-५.

अत्र सांख्यदर्शनप्रसिद्धान्येवच तुर्विंशतितत्त्वानि परिगणितानि । किञ्चिन्न्यूनातिरेकयुतमपीदं वर्णनं वेदान्तसिद्धान्तानुगुणमिति लक्ष्यते । तदेतद् यथा तथा श्लोकभाष्यं विभज्य दर्शयिष्यामः –

(अ) महाभूतानि – महान्ति च तानि सर्वविकारव्यापकत्वात् भूतानि च सूक्ष्माणि ; स्थूलानि तु इन्द्रियगोचरशब्देन अभिधायिष्यन्ते ॥

(आ) अहङ्कारः – महाभूतकारणम् अहम्प्रत्ययलक्षणः (महदादिकार्यत्वेन उक्तः) ॥

(इ) अहङ्कारकारणं 'बुद्धिः' – अध्यवसायलक्षणा । (इयं 'महान्' इति कारिकायां व्यपदिष्टा ) ॥

(ई) तत्कारणम् 'अव्यक्तम्' एव च । न व्यक्तम् अव्यक्तम् । अव्याकृतम् ईश्वरशक्तिः, 'मम माया दुरत्यया' (७-१४) इत्युक्तम् । (न तु सांख्यदर्शने इव स्वतन्त्रम् ।) एवशब्दः प्रकृत्यवधारणार्थः ; एतावत्येव अष्टधा भिन्ना (७-४) प्रकृतिः । चशब्दो भेदसमुच्चयार्थः ॥

(उ) इन्द्रियाणि दश, .... एकं च, किं तत् ? मनः, एकादशं सङ्कल्पाद्यात्मकम् ॥

(ऊ) पञ्च च इन्द्रियगोचराः शब्दादयो विषयाः । (तान्येतानि इन्द्रियाणि शब्दादिसहितानि 'षोडशकश्च विकारः' इति कारिकायाम् उपसंख्यातानि) ॥

(ए) 'तान्येतानि सांख्याः चतुर्विंशतितत्त्वान्याचक्षते' (सर्वाण्यप्येतानि अत्र 'क्षेत्र'संज्ञया संगृहीतानि क्षेत्रज्ञस्य साक्षिणो विषयत्वेन, तदधीनान्येव, न तु सांख्यानामिव स्वतन्त्राणि । पुरुषस्तु क्षेत्रज्ञः 'न प्रकृतिर्न विकृति'रिति कारिकायामुक्तः पञ्चविंशः इत्यर्थः ) ॥

## अव्यक्तविचारे ग्राह्यांशः –

१२६. अव्यक्तशब्दवाच्या प्रकृतिः, महदादिकार्यलक्षणेन व्यक्तेन सरूपा च विरूपा च इति सांख्याः –

सौक्ष्म्यात्तदनुपलब्धिर्नाभावात् कार्यतस्तदुपलब्धेः ।
महदादि तच्च कार्यं प्रकृतिविरूपं सरूपं च ॥ ८ ॥

[ अव्यक्तस्य सूक्ष्मत्वात् अनुपलब्धिः, तत्कार्यं महदादि दृष्ट्वा तदनुमीयते ॥ ]

हेतुमदनित्यमव्यापि सक्रियमनेकमाश्रितं लिङ्गम् ।
सावयवं परतन्त्रं व्यक्तं विपरीतमव्यक्तम् ॥ १० ॥

| व्यक्तम् | अव्यक्तम् |
| --- | --- |
| हेतुमत्, प्रधानकारणकत्वात् | अहेतुमत् |
| अनित्यम्, उत्पत्तिमत्वात् | नित्यम् |
| अव्यापि, परिच्छिन्नम् | व्यापि, सर्वगतम् |
| सक्रियम्, सूक्ष्मं शरीरमाश्रित्य संसरति | अक्रियम् |
| अनेकम्, त्रयोविंशत्यात्मकं बुद्ध्यादिरूपेण | एकम् |
| आश्रितम्, स्वस्वकारणमाश्रयन्ते बुद्ध्यादयः | अनाश्रितम् |
| लिङ्गम्, स्वकारणे लीयते | न लीयते |
| सावयवम्, शब्दस्पर्शाद्यवयवम् | निरवयवम् |
| परतन्त्रम्, स्वकारणायत्तम् | स्वतन्त्रम्, स्वयमेव प्रभवति कार्यरूपेण |

अत्र यत्तावदुच्यते अव्यक्तम् 'अहेतुमत्' इति, तदभ्युपगम्यत एव गीताशास्त्रे –

(१) प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि ।
विकारांश्च गुणांश्चैव विद्धि प्रकृतिसम्भवान् ॥ १३–१९

इति प्रकृत्याख्यायास्तस्या अनादित्वस्योररीकरणात् । यत्पुनर्नित्यत्वं तस्याः, तदप्यत एव व्यावहारिकदृष्ट्या अभ्युपगम्यत एव । सत्यत्वं तु तस्या नेष्यतेऽत्र शास्त्रे ।

(२) क्षेत्रक्षेत्रज्ञयोरेवमन्तरं ज्ञानचक्षुषा ।
भूतप्रकृतिमोक्षं च ये विदुर्यान्ति ते परम् ॥ १३–३४

इति तन्मोक्षस्यापीष्टत्वात् । तथा हि भाष्यम् –

(1) भूतप्रकृतिमोक्षं च भूतानां प्रकृतिः, अविद्यालक्षणा अव्यक्ताख्या । तस्या भूतप्रकृतेः मोक्षणम् अभावगमनं च ये विदुर्विजा-

न्ति यान्ति गच्छन्ति ते परं परमार्थतत्त्वं ब्रह्म । न पुनर्देहम् आददते इत्यर्थः ॥ भा. पा. २१७

इति ॥

यदपि स्वतन्त्रम् अव्यक्तं स्वयमेव प्रभवति कार्यरूपेण – इति तदपि नानुमन्यतेऽत्र ।

(३) मम योनिर्महद् ब्रह्म तस्मिन् गर्भं दधाम्यहम् ।
संभवः सर्वभूतानां ततो भवति भारत ॥ १४–३

इति 'मम योनिः' इति पारतन्त्र्यकथनात् । तथा हि भाष्यकारः –

(2) ईश्वरपरतन्त्रयोः क्षेत्रक्षेत्रज्ञयोर्जगत्कारणत्वम्, न तु सांख्यानामिव स्वतन्त्रयोः–इत्येवमर्थम् (परं भूयः इत्यादिरध्याय आरभ्यते) ॥ भा. पा. २१८

इत्यध्यायसंबन्धं कथयन्, प्रकृतश्लोकभाष्ये –

(3) मम 'स्वभूता मदीया माया' त्रिगुणात्मिका प्रकृतिर्योनिः सर्वभूतानां कारणम् । सर्वकार्येभ्यो महत्त्वात्, भरणाच्च स्वविकाराणां 'महद् ब्रह्म' इति योनिरेव विशेष्यते ॥ भा. पा. २१९

इति भगवत्पारतन्त्र्यमेव क्षेत्रस्य प्राह । वाक्यशेषे च

(4) अविद्याकामकर्मोपाधिस्वरूपानुविधायिनं क्षेत्रज्ञं क्षेत्रेण संयोजयामि –

इति क्षेत्रक्षेत्रज्ञयोः संयोगमपि कर्मापेक्षफलदात्रीश्वरायत्तमेव कथयति स्म ॥

अत एव चानाश्रितम्, न लीयते – इति च सापेक्षमित्येवाभ्युपेयतेऽत्र शास्त्रे –

(४) भूमिरापोऽनलो वायुः खं मनोबुद्धिरेव च ।
अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥ ७-४

इति भगवत्प्रकृतित्वेनैव कथनात्

(5) 'मम ऐश्वरी मायाशक्तिः' भा. पा. ११७

इतीश्वरशक्तित्वेनैव भाष्ये व्याख्यानदर्शनाच्च ईश्वराश्रितत्वसिद्धेः ।

(6) अव्यक्तं पुरुषे ब्रह्मन्निर्गुणे संप्रलीयते ॥ मो.ध. ३३८-३१

इत्यन्यत्र अव्यक्तस्यापि लयस्मरणाच्च ॥

१२७. अथ पुरुषगता चिन्ता कर्तव्या । तत्र सांख्याः

सङ्घातपरार्थत्वात् त्रिगुणादि विपर्ययादधिष्ठानात् ।
पुरुषोऽस्ति भोक्तृभावात् कैवल्यार्थं प्रवृत्तेश्च ॥ १७ ॥

इति पुरुषं हेतुभिरनुमिमते ॥

जननमरणकरणानां प्रतिनियमादयुगपत्प्रवृत्तेश्च ।
पुरुषबहुत्वं सिद्धं त्रैगुण्यविपर्ययाच्चैव ॥ १८ ॥

इति पुरुषबहुत्वं च ॥

तत्र यद्यपि प्रकृतिपुरुषयोरीश्वरप्रकृतित्वेनाभिवर्णनात् अत्रापि शास्त्रे पुरुषास्तित्वमङ्गीकृतम्,

(१) भूतग्रामः स एवायं भूत्वा भूत्वा प्रलीयते ।
रात्र्यागमेऽवशः पार्थ प्रभवत्यहरागमे ॥ ८-१९

इत्यादि स्थलेषु भूतशब्दोदितस्थावरजङ्गमलक्षणप्राणिबहुत्वमप्यनूदितं च, तथापि पुरुषो नानुमेयोऽस्मिन् शास्त्रे –

(२) इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते ।
एतद् यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः ॥ १३-१

इति क्षेत्रवेदितृत्वेन स्वयंसिद्धत्वोररीकरणात् ॥

(३) अन्तवन्त इमे देहा नित्यस्योक्ताः शरीरिणः ।
अनाशिनोऽप्रमेयस्य तस्माद्युध्यस्व भारत ॥ २-१८

इत्यप्रमेयत्वेन निर्दिष्टत्वाच्च न तस्यानुमेयत्वं मृष्यते । अप्रमेयत्वं च पुरुषस्य इत्थमुपपादितं भाष्ये –

(1) सिद्धे ह्यात्मनि प्रमातरि प्रमित्सोः प्रमाणान्वेषणा भवति । न हि पूर्वम् 'इत्थमहम्' इत्यात्मानं प्रमाय पश्चात् प्रमेयपरिच्छेदाय प्रवर्तते । न हि आत्मा नाम कस्यचिदप्रसिद्धो भवति ॥ भा. पा. १६.

इति ॥

पुरुषबहुत्वं परमार्थदृष्ट्या निराकृतमेवेह शास्त्रे । पुरुषस्य सर्वदेहस्थितपरमात्मना एकत्वस्यैव प्रतिपादने प्रवृत्तत्वात् –

(४) क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत ।
क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत्तज्ज्ञानं मतं मम ॥ १३-२

इति ॥

१२८. तत्र प्रकृतिगुणाः सत्त्वादयः सांख्यैरेवं वर्णिताः –

प्रीत्यप्रीतिविषादात्मकाः प्रकाशप्रवृत्तिनियमार्थाः ।
अन्योन्याभिभवाश्रयजननमिथुनवृत्तयश्च गुणाः ॥ १२ ॥

[ सत्त्वरजस्तमांसि गुणाः प्रीत्याद्यात्मकाः, प्रकाशनादिसामर्थ्याः ; अन्योन्याभिभवाः, अन्योन्याश्रयाः, अन्योन्यजननाः, अन्योन्यमिथुनाः, अन्योन्यवृत्तयश्च ॥ ]

सत्त्वं लघु प्रकाशकमिष्टमुपष्टम्भकं चलं च रजः ।
गुरु वरणकमेव तमः प्रदीपवच्चार्थतो वृत्तिः ॥ १३ ॥

[यथा परस्परविरुद्धतैलाग्निवर्तिसंयोगात् प्रदीपः अर्थप्रकाशं जनयति, एवं गुणा अपि स्वं स्वम् अर्थं निष्पादयन्ति ॥ ]

इदं सर्वमङ्गीकृतमिहापि चतुर्दशस्वध्यायेषु । तच्चैतद्ग्रन्थशरीरे एव द्रष्टव्यम् ॥

प्रकृतेः प्रवृत्तिः किंकृता ? –

१२९. अथ संसारमोक्षयोर्विषये शास्त्रस्य सांख्यवादैः साम्य-वैषम्ये परिशीलयितव्ये । तत्र सांख्याः –

स्वां स्वां प्रतिपद्यन्ते परस्पराकूतहेतुकां वृत्तिम् ।
पुरुषार्थ एव हेतुर्न केनचित् कार्यते करणम् ॥ ३१ ॥

[ प्रकृतिपरिणामभूतानि बुद्ध्यहङ्कारमनांसि केवलं पुरुषार्थः कर्तव्य इति प्रवर्तन्ते ॥ ]

रङ्गस्य दर्शयित्वा निवर्तते नर्तकी यथा नृत्यात् ।
पुरुषस्य तथात्मानं प्रकाश्य विनिवर्तते प्रकृतिः ॥ ५९ ॥

नानाविधैरुपायैरुपकारिण्यनुपकारिणः पुंसः ।
गुणवत्यगुणस्य सतस्तस्यार्थमपार्थकं चरति ॥ ६० ॥

[ अपार्थकम् – आत्मनः प्रत्युपकारप्रयोजनम् अनपेक्ष्यैव ॥ ]

तस्मान्न बध्यते नापि मुच्यते नापि संसरति कश्चित् ।
संसरति बध्यते मुच्यते च नानाश्रया प्रकृतिः ॥ ६२ ॥

रूपैः सप्तभिरेव तु बध्नात्यात्मानमात्मना प्रकृतिः ।
सैव च पुरुषार्थं प्रति विमोचयत्येकरूपेण ॥ ६३ ॥

[ रूपैः सप्तभिः – धर्मः, ज्ञानम् , वैराग्यम् , ऐश्वर्यम् ; अधर्मः, अज्ञानम् , अवैराग्यम् , अनैश्वर्यम् – इति भाष्यम् । कथमष्टौ परिगणितानीति तु न ज्ञायते । तत्त्वकौमुद्यां तु तत्त्वज्ञानवर्जम् – इति विशदीकृतम् ॥ ]

गीताशास्त्रे तु एवमुक्तम् –

(१) पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान् गुणान् ।
कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु ॥ १३-२१.

भाष्यम् (1) – एतदुक्तं भवति – प्रकृतिस्थत्वाख्या अविद्या, गुणेषु च सङ्गः कामः, संसारस्य कारणम् इति। तच्च परिवर्जनाय उच्यते। अस्य च निवृत्तिकारणम् ज्ञानवैराग्ये ससंन्यासे गीताशास्त्रे प्रसिद्धम्। तच्च ज्ञानं पुरस्तादुपन्यस्तम् क्षेत्रक्षेत्रज्ञविषयम् 'यज्ज्ञात्वाऽमृतमश्नुते' इति। उक्तं चान्यापोहेन, अतद्धर्माध्यारोपेण च॥ भा. पा. २०९ इति॥

एवं च प्रकृतिः कार्यकारणकर्तृत्वे हेतुः – इति यद्यपि पूर्वस्मिन् श्लोके उक्तम्, तथापि अविद्याकामयोरेव साक्षात् संसारकारणत्वम्, प्रकृतिपुरुषयोः संयोगो न वास्तविकः – इत्येव गीताचार्यस्य मतम्। एवं हि भाष्यकारः –

(2) यदा पुनः कार्यकरणसुखदुःखरूपेण हेतुफलात्मना परिणतया प्रकृत्या भोग्यया पुरुषस्य तद्विपरीतस्य भोक्तृत्वेन अविद्यारूपः संयोगः स्यात् तदा संसारः स्यात्॥ भा. पा. २०८.

न च गीताशास्त्रे 'न केनचित् कार्यते करणम्' इति वादोऽनुमोद्यते, 'तस्मिन् गर्भं दधाम्यहम्' (१४–३) इत्युक्तप्रकारेण परमेश्वरस्यैव संयोजयितृत्वेनाभ्युपगमात्॥

अथ मोक्षविषये एवं सांख्याभ्युपगमः –

एवं तत्त्वाभ्यासान्नास्मि न मे नाहमित्यपरिशेषम्।
अविपर्ययाद् विशुद्धं केवलमुत्पद्यते ज्ञानम्॥ ६४॥

[पञ्चविंशतितत्त्वज्ञानाभ्यासात् विशुद्धं ज्ञानम् अहंताममताविवर्जितम् उत्पद्यते इत्यभिप्रायः॥]

दृष्टा मयेत्युपेक्षक एको दृष्टाहमित्युपरमत्येका।
सति संयोगेऽपि तयोः प्रयोजनं नास्ति सर्गस्य॥ ६६॥

[प्रकृतिपुरुषविवेके सति विषयोपलब्धिर्वा गुणपुरुषान्तरोपलब्धिर्वा प्रयोजनं नास्ति, यद्यपि प्रकृतिपुरुषयोर्व्यापकयोः संयोगोऽनुवर्तेत एव – इत्यभिप्रायः॥]

गीताशास्त्रे तु –

प्रकृत्यैव च कर्माणि क्रियमाणानि सर्वशः ।
यः पश्यति तथात्मानमकर्तारं स पश्यति ॥
यदा भूतपृथग्भावमेकस्थमनुपश्यति ।
तत एव च विस्तारं ब्रह्म संपद्यते तदा ॥ १३-२९, ३०.

भाष्यम् – भूतानां पृथग्भावं पृथक्त्वम् एकस्थम् एकस्मिन्नात्मनि स्थितम् एकस्थम् । अनुपश्यति शास्त्राचार्योपदेशम् अनु आत्मानं प्रत्यक्षत्वेन पश्यति आत्मैवेदं सर्वमिति ; तत एव च तस्मादेव च विस्तारम् उत्पत्तिं विकासम् "आत्मतः प्राण आत्मत आशा आत्मतः स्मर आत्मत आकाश आत्मतस्तेज आत्मत आप आत्मत आविर्भाव-तिरोभावौ आत्मतोऽन्नम्" (छां. ७-२६-१) इत्येवमादिप्रकारैर्विस्तारं यदा पश्यति ब्रह्म संपद्यते ब्रह्मैव भवति तदा तस्मिन् काले इत्यर्थः ॥ भा. पा. २१५-२१६.

आत्मत एव सर्वस्यापि प्रभवाप्ययदर्शनात् तदनन्यत्वन्यायेन प्रकृतेरात्मानन्यत्वं दृष्ट्वा 'परमात्मैवाद्वयोऽहम् अकर्ता' इति सम्यग्ज्ञानं यदा लभते तदैव ब्रह्मात्मताप्राप्तिलक्षणं परमपुरुषार्थं लभते इत्युच्यते । न तु प्रकृतिपुरुषसंयोगे सत्येव विवेकमात्रात् इति विशेषः ॥

१३०. अथ जीवन्मुक्तिविदेहमुक्त्यभ्युपगमे प्रस्थानवैलक्षण्य-मित्थम् –

सम्यग्ज्ञानाधिगमाद्धर्मादीनामकारणप्राप्तौ ।
तिष्ठति संस्कारवशाच्चक्रभ्रमिवद् धृतशरीरः ॥
प्राप्ते शरीरभेदे चरितार्थत्वात् प्रधानविनिवृत्तौ ।
ऐकान्तिकमात्यन्तिकमुभयं कैवल्यमाप्नोति ॥ ६७, ६८

इति साङ्ख्याः ॥

गीताशास्त्रे तूच्यते –

(१) एषा ब्राह्मी स्थितिः पार्थ नैनां प्राप्य विमुह्यति ।
स्थित्वाऽस्यामन्तकालेऽपि ब्रह्मनिर्वाणमृच्छति ॥ २–७२.

भाष्यम् – एषा यथोक्ता ब्राह्मी ब्रह्मणि भवा इयं स्थितिः सर्वं कर्म संन्यस्य ब्रह्मरूपेणैवावस्थानम् इत्येतत्, हे पार्थ नैनां स्थितिं प्राप्य लब्ध्वा विमुह्यति मोहं न प्राप्नोति । स्थित्वा अस्यां स्थितौ ब्राह्मयां यथोक्तायाम् अन्तकालेऽपि अन्त्ये वयस्यपि ब्रह्मनिर्वाणं ब्रह्मणि निर्वृतिं मोक्षम् ऋच्छति गच्छति । किमु वक्तव्यं ब्रह्मचर्यादेव संन्यस्य कर्माणि यावज्जीवं यो ब्रह्मण्येवावतिष्ठते स ब्रह्मनिर्वाणम् ऋच्छतीति ॥

[अत्र ब्रह्मणि स्थितिः – जीवन्मुक्तिः, ब्रह्मनिर्वाणम् – विदेहकैवल्यम् ॥ ]

(२) योऽन्तःसुखोऽन्तरारामस्तथान्तर्ज्योतिरेव यः ।
स योगी ब्रह्मनिर्वाणं ब्रह्मभूतोऽधिगच्छति ॥
लभन्ते ब्रह्मनिर्वाणमृषयः क्षीणकल्मषाः ।
छिन्नद्वैधा यतात्मानः सर्वभूतहिते रताः ॥
कामक्रोधवियुक्तानां यतीनां यतचेतसाम् ।
अभितो ब्रह्मनिर्वाणं वर्तते विदितात्मनाम् ॥ ५–२४, २५, २६

[आत्मध्यानेन आत्मज्ञानेन च इहैव ब्रह्मभूतानां जीवतां मृतानां मोक्षः इत्यर्थः ॥ ]

१३१. सर्वथापि तु प्रकृतेरपि पुरुषस्येव सत्यत्वम्, पुरुषाणां नानात्वम्, प्रकृतिपुरुषविवेकमात्रात् सम्यग्ज्ञानेन जीवन्मुक्तिः, शरीरपाते तु विदेहकैवल्यम् इति सांख्यप्रस्थानम् अन्यादृशम्, अन्यादृशमेव तु गीताप्रस्थानम्

(१) य एवं वेत्ति पुरुषं प्रकृतिं च गुणैः सह ।
सर्वथा वर्तमानोऽपि न स भूयोऽभिजायते ॥ १३–२३.

[भाष्यम् – य एवम् यथोक्तप्रकारेण वेत्ति पुरुषम् (-'उपद्रष्टाऽनुमन्ता च' इत्यादिना अतीतानन्तरश्लोकोक्तप्रकारेण अद्वितीयपरमात्मानं सन्तम्) साक्षात् 'अहम्' इति ; प्रकृतिं च यथोक्ताम् अविद्यालक्षणां गुणैः स्वविकारैः सह निवर्तिताम् अभावमापादितां विद्यया ; सर्वथा सर्वप्रकारेण वर्तमानोऽपि स भूयः पुनः पतितेऽस्मिन् (मिथ्याप्रत्ययकृते) विद्वच्छरीरे देहान्तराय नाभिजायते नोत्पद्यते देहान्तरं न गृह्णातीत्यर्थः। अपिशब्दात् किमु वक्तव्यं स्ववृत्तस्थो न जायते इत्यभिप्रायः ॥]

इत्यभिवर्णितम्, इति सर्वं शिवम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यवरेण्यश्रीपूज्यपादश्रीमच्छङ्करभगवच्चरणस्मरण-
परिचयावाप्तवेदान्तप्रवेशेन श्रीबोधानन्देन्द्रसरस्वतीशिष्येण
सच्चिदानन्देन्द्रसरस्वत्याख्येन भिक्षुणा प्रणीते
गीताशास्त्रार्थविवेके सांख्यदर्शनोपसंग्रहो नाम एकविंशतितमोऽध्यायः

---

# २२. योगदर्शनोपसंग्रहः

१३२. अथेदानीं यथैव साङ्ख्यप्रस्थानेन सालक्षण्यं वैलक्षण्यं च गीताप्रस्थानस्य दर्शयित्वा ग्राह्यांशा अनुक्रान्ताः, तथैव योग-प्रस्थानेनापि अस्य प्रस्थानस्य सालक्षण्यवैलक्षण्ये सूचयित्वा ग्राह्यांशान् उपन्यस्यामः । तत्र सर्वप्रथमं योगस्य चित्तवृत्तिनिरोधलक्षणस्य स्वस्वरूपेऽवस्थानं फलमिति सममेवाभ्युपगतम् । तद्यथा –

योगश्चित्तवृत्तिनिरोधः ॥ तदा द्रष्टुः स्वरूपेऽवस्थानम् ॥ यो सू॰ १-२. ३

इति हि सूत्रम् । गीताश्लोकश्च –

(१) यत्रोपरमते चित्तं निरुद्धं योगसेवया ।
यत्र चैवात्मनात्मानं पश्यन्नात्मनि तुष्यति ॥ ६-२०.
.... .... .... ....
तं विद्याद्दुःखसंयोगवियोगं योगसंज्ञितम् ॥ ६-२३

इति । तत्र स्वम् आत्मरूपम् कीदृशं यत्रावस्थितिः समाधौ – इत्यत्र तु प्रस्थानभेदः । एतच्चोदर्के परिशीलयितव्यम् इत्यास्तां तावत् ॥

१३३. चित्तवृत्तिनिरोधे क उपायः ? – इत्यत्र योग-सूत्रम् –

अभ्यासवैराग्याभ्यां तन्निरोधः ॥ १-१२

इति । भगवानपि अर्जुनेन मनोनिग्रहस्य दुष्करत्वं मन्वानेन पृष्ट-स्तदुपायमाह –

(१) असंशयं महाबाहो मनो दुर्निग्रहं चलम् ।
अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते ॥ ६-३५.

अभ्यासवैराग्ये किंलक्षणे इत्यत्र योगसूत्रद्वयम् –

तत्र स्थितौ यत्नोऽभ्यासः ॥ १-१३

दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्यम् ॥ १-१५

इति । यथोदाहृतगीताश्लोकव्याख्यानावसरे भाष्यकारा आहुः –

(1) अभ्यासेन । अभ्यासो नाम चित्तभूमौ कस्याञ्चित् समानप्रत्ययावृत्तिश्चित्तस्य । वैराग्येण । वैराग्यं नाम दृष्टादृष्टेष्टभोगेषु दोषदर्शनाभ्यासाद् वैतृष्ण्यम् । तेन च वैराग्येण गृह्यते । विक्षेपरूपप्रचारश्चित्तस्य । एवं तन्मनः गृह्यते निगृह्यते निरुध्यते इत्यर्थः ॥ भा. पा. ११२

इति । तत्र वैराग्यं तावत् 'ध्यायतो विषयान् पुंसः' (२-६२), 'काम एष क्रोध एषः' (३-३७), 'तदा गन्तासि निर्वेदम्' (२-५२) इत्यादिस्थलेषु गीतास्वपि निर्दिष्टमेव । अभ्यासस्तु आत्मस्वरूपे एव समानचित्तवृत्तिप्रवाहरूपः कर्तव्य इत्युक्तम् । तच्चानुपदमेव दर्शयिष्यते ॥

१३४. चित्तवृत्तिनिरोधलक्षणसमाधेरुपायान्तराणि सूत्रे एवं निर्दिष्टानि –

ईश्वरप्रणिधानाद्वा ॥ १-२३

'वीतरागविषयं वा चित्तम्', 'स्वप्ननिद्राज्ञानालम्बनं वा', 'यथाभिमतध्यानाद् वा' ॥ १-३७, ३८, ३९

इति । गीतास्वपि

तानि सर्वाणि संयम्य युक्त आसीत मत्परः ॥ २-६१.

मनः संयम्य मच्चित्तो युक्त आसीत मत्परः ॥ ६-१४.

इति परमेश्वरप्रणिधानमेव शिष्टं यद्यपि, तथापि परमेश्वरसतत्त्वे प्रस्थानभेदोऽस्ति । तथा हि –

क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः ॥ १-२४

इति योगाः । गीताचार्यस्तु –

क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत ॥ १३-२

इत्याह । एवं चेदं स्पष्टं गम्यते यद् योगशास्त्रानुयायिनो द्वैतिनः, साङ्ख्या इव पुरुषभेदम्, पुरुषेश्वरभेदं चाभिमन्यन्ते ; अत एव ते पुरुषविशेषम् ईश्वरं ध्येयत्वेन स्वीकुर्वते समाधिलाभाय । गीताशास्त्रे तु आत्मैकत्ववाद एवाङ्गीक्रियते स्वात्मैव तु परमेश्वरो ध्यातव्यो योगिभिरित्युपदिश्यते च इति ॥

अत एवोदाहृतश्लोकव्याख्यानावसरे भाष्यकार आह –

(1) तानि सर्वाणि (इन्द्रियाणि) संयम्य संयमनं वशीकरणं कृत्वा युक्तः समाहितः सन् आसीत मत्परः । अहं वासुदेवः सर्वप्रत्यगात्मा परो यस्य स मत्परः ; नान्योऽहं तस्मात् – इत्यासीत इत्यर्थः ॥ भा॰ २-६१, पा॰ ३५॰

१३५. ईश्वरस्य ध्यातुरन्यत्वादेव प्रणवजपप्रणवार्थभावने अपि चित्तैकाग्र्ये उपायत्वेन निर्दिष्टे योगसूत्रे –

तज्जपस्तदर्थभावनम् ॥ १-२८

इति । योगसूत्रभाष्यकारश्च लिखति स्म समनन्तरसूत्रार्थं व्याख्यास्यन् –

(1) ये तावदन्तराया व्याधिप्रभृतयस्ते तावत् ईश्वरप्रणिधानान्न भवन्ति । स्वरूपदर्शनमप्यस्य भवति । यथैवेश्वरः पुरुषः शुद्धः प्रसन्नः

केवलोऽनुपसर्गः, तथा अयमपि बुद्धेः प्रतिसंवेदी यः पुरुषः – तमधिगच्छति ॥ यो॰ सू॰ भा॰ १–२९, पा॰ ३३.

गीताशास्त्रेऽपि उपासनाप्रकरणे –

ओमित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन् ।
यः प्रयाति त्यजन् देहं स याति परमां गतिम् ॥ ८–१३

इत्यनुमोदितम् ब्रह्मवाचकस्य प्रणवस्य जपस्तदर्थभावनं च, कालान्तरे ब्रह्मसायुज्योपायत्वेन । इहापि तु यद्यपि माण्डूक्योपनिषद्युक्तरीत्या अभिधानाभिधेयातीतब्रह्मात्मस्वरूपविज्ञानाय प्रणवसतत्त्वपरिशीलनं न दण्डवारितम्, उपास्यब्रह्मणो विज्ञेयब्रह्मस्वरूपत्वादेव, तथापि न कण्ठरवेणोक्तं तत् । ब्रह्मात्मैकत्वदर्शनं तु साक्षात् ध्यानफलत्वेनोद्घोषितम् –

प्रशान्तमनसं ह्येनं योगिनं सुखमुत्तमम् ।
उपैति शान्तरजसं ब्रह्मभूतमकल्मषम् ॥
युञ्जन्नेवं सदात्मानं योगी विगतकल्मषः ।
सुखेन ब्रह्मसंस्पर्शमत्यन्तं सुखमश्नुते ॥
सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि ।
ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः ॥ ६–२७, २८, २९.

अत्र तृतीयश्लोकव्याख्याने एवं लिखितं भाष्ये –

(2) सर्वभूतस्थं सर्वेषु भूतेषु स्थितं स्वम् आत्मानं सर्वभूतानि च आत्मनि ब्रह्मादीनि स्तम्बपर्यन्तानि च सर्वभूतानि आत्मनि एकतां गतानि ईक्षते पश्यति, योगयुक्तात्मा समाहितान्तःकरणः सर्वत्र समदर्शनः सर्वेषु ब्रह्मादिस्थावरान्तेषु विषमेषु सर्वभूतेषु समं निर्विशेषं ब्रह्मात्मैकत्वविषयं दर्शनं ज्ञानं यस्य स सर्वत्रसमदर्शनः ॥ पा॰ ११०.

१३६. समाहितचित्तस्य या प्रज्ञा जायते सा कीदृशी-त्यत्रापि प्रस्थानभेद एव – सा च किं ज्ञातुर्व्यतिरिक्ता अव्यतिरिक्ता वा ? – इत्यत्र च । तथा हि योगसूत्राणि –

ऋतम्भरा तत्र प्रज्ञा ॥ १-४८.

[ भाष्यम् – अन्वर्था च सा । सत्यमेव बिभर्ति न च तत्र विपर्यासज्ञान-गन्धोऽप्यस्ति ॥ ]

श्रुतानुमानप्रज्ञाभ्यामन्यविषया विशेषार्थत्वात् ॥ १-४९.

तज्जः संस्कारोऽन्यसंस्कारप्रतिबन्धी ॥ १-५०

इति । अत्र जायमाना प्रज्ञा 'सूक्ष्मव्यवहितविप्रकृष्टवस्तु'विषया इति भाष्यतो विज्ञायते । अत एव सा ज्ञातुर्व्यतिरिक्ता चित्ताश्रयैव । इतश्च । यत आह सूत्रकारः – 'तज्जः संस्कारोऽन्यसंस्कारप्रतिबन्धी' इति । न हि ज्ञातुरव्यतिरिक्तायाः स्वरूपभूतायाः प्रज्ञायाः संस्कारः समस्तीति । गीताचार्यस्तु ब्रूते –

(१) यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति ।
तस्याहं न प्रणश्यामि स च मे न प्रणश्यति ॥ ६-३०

इति । इयं च ब्रह्मात्मैकत्वप्रज्ञा । तथा हि भाष्यम् –

"तस्यैवम् आत्मैकत्वदर्शिनोऽहमीश्वरो न प्रणश्यामि न परोक्षतां गमिष्यामि । स च मे न प्रणश्यति ; स च विद्वान् मम वासुदेवस्य न प्रणश्यति । न परोक्षो भवति । तस्य च मम च एकात्मकत्वात् । स्वात्मा हि नाम आत्मनः प्रिय एव भवति ॥" पा· ११०.

इति । एतेनाजाद्वयरूपैवास्य प्रज्ञा इत्युक्तं भवति ॥

१३७. समाधिबलादेव कैवल्यं कथं भवेदित्यत्र योगसूत्रम् –

तस्यापि निरोधे सर्वनिरोधान्निर्बीजः समाधिः ॥ १-५१.

समाधिप्रज्ञाप्रभवः संस्कारोऽन्यसंस्कारप्रतिबन्धी – इत्युक्तं पुरस्तात् (५०तमसूत्रे)। तस्यापि संस्कारस्य निरोधे निर्बीजः समाधिरिति प्रकृतसूत्रार्थः। अत्र भाष्यकृदाह –

"व्युत्थाननिरोधसमाधिप्रभवैः सह कैवल्यभागीयैः संस्कारैश्चित्तं स्वस्यां प्रकृताववस्थितायां प्रविलीयते। तस्मात् ते संस्काराः, चित्तस्य अधिकारविरोधिनो न स्थितिहेतवो भवन्तीति। यस्मात् अवसिताधिकारं सह कैवल्यभागीयैः संस्कारैश्चित्तं निवर्तते। तस्मिन् निवृत्ते पुरुषः स्वरूपमात्रप्रतिष्ठः, अतः शुद्धः केवलो मुक्त इत्युच्यत इति॥ यो॰ भा॰ पा॰ ५५–५६.

विभूतिपादान्ते च सूत्रम् –

सत्त्वपुरुषयोः शुद्धिसाम्ये कैवल्यमिति॥ ३–५५.

भाष्यम् – यदा निर्धूतरजस्तमोमलं बुद्धिसत्त्वं पुरुषस्य अन्यताप्रतीतिमात्राधिकारं दग्धक्लेशबीजं भवति, तदा पुरुषस्य शुद्धिसारूप्यमिवापन्नं भवति। तदा पुरुषस्योपचरितभोगाभावः शुद्धिः। एतस्याम् अवस्थायां कैवल्यं भवति, ईश्वरस्य अनीश्वरस्य वा; विवेकजज्ञानभागिनः, इतरस्य वा। न हि दग्धक्लेशबीजस्य ज्ञाने पुनरपेक्षा काचिदस्ति। सत्त्वशुद्धिद्वारेण एतत्समाधिजमैश्वर्यं ज्ञानं च उपक्रान्तम्। परमार्थतस्तु ज्ञानाददर्शनं निवर्तते; तस्मिन्निवृत्ते न सन्त्युत्तरे क्लेशाः। क्लेशाभावात् कर्मविपाकाभावः। चरिताधिकाराश्च एतस्याम् अवस्थायां गुणा न पुरुषस्य पुनर्दृश्यत्वेनोपतिष्ठन्ते। तत्पुरुषस्य कैवल्यम्; तदा पुरुषः स्वरूपमात्रज्योतिः, अमलः, केवली भवति॥ यो॰ भा॰ पा॰ १७५

शास्त्रान्ते च योगसूत्रम् –

पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः कैवल्यम्, स्वरूपप्रतिष्ठा वा चितिशक्तेरिति॥ ४–३४.

सूत्रं त्वेवं व्याख्यातं भाष्यकृता –

कृतभोगापवर्गाणां पुरुषार्थशून्यानां यः प्रतिप्रसवः कार्यकारणात्मकानां गुणानाम्, तत् कैवल्यम् । स्वरूपप्रतिष्ठा पुनर्बुद्धिसत्त्वानभिसंबन्धात् पुरुषस्य चितिशक्तिरेव केवला । तस्याः सदा तथैवावस्थानं कैवल्यमिति ॥ यो॰ भा॰ पा॰ २०७.

सेश्वरसांख्यां योगाः सांख्यसमानयोगक्षेमा एव प्रकृतिपुरुषविचारे इति तदभ्युपगतं प्रकृतिसत्यत्वं नैवाभिमतं गीताशास्त्रकारस्य । तद् यथैव पूर्वं ( १२६तम खण्डे ) प्रकृतेरविद्याकृतत्वात् अनृतत्वमुपपादितं तथैवात्राप्यनुसंधेयम् । प्रकृतिपुरुषविवेके सति या स्वरूपप्रतिष्ठा फलं सा न प्रत्येकं पुरुषाणां केवलीभावोऽत्र गीताशास्त्रे अनुमन्यते, किंतु अद्वितीयब्रह्मात्मभावरूपं कैवल्यमेव । अत्रानुसंधेयमिदं श्लोकद्वयम् –

(१) इति क्षेत्रं तथा ज्ञानं ज्ञेयं चोक्तं समासतः ।
मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते ॥ १३-१८.

भाष्यम् – इति एवं क्षेत्रं महाभूतादि धृत्यन्तम्, तथा ज्ञानम् अमानित्वादितत्त्वज्ञानार्थदर्शनपर्यन्तम्, ज्ञेयं च 'ज्ञेयं यत्तत्' इत्यादि 'तमसः परमुच्यते' इत्येवमन्तम् उक्तं समासतः सङ्क्षेपतः । एतावान् सर्वो हि वेदार्थो गीतार्थश्चोपसंहृत्योक्तः । अस्मिन् सम्यग्दर्शने कोऽधिक्रियत इति ? उच्यते – मद्भक्तः मयीश्वरे सर्वज्ञे परमगुरौ वासुदेवे समर्पितसर्वात्मभावः, यत् पश्यति शृणोति स्पृशति वा सर्वमेव भगवान् वासुदेवः – इत्येवंग्रहाविष्टबुद्धिः, मद्भक्तः । स एतद् यथोक्तं सम्यग्दर्शनं विज्ञाय मद्भावाय मम भावो मद्भावः परमात्मभावः । तस्मै मद्भावाय उपपद्यते मोक्षं गच्छति ॥ भा॰ पा॰ २०६.

य एवं वेत्ति पुरुषं प्रकृतिं च गुणैः सह ।
सर्वथा वर्तमानोऽपि न स भूयोऽभिजायते ॥ १३-२३.

भाष्यम् – य एवं यथोक्तप्रकारेण वेत्ति पुरुषं साक्षात् 'अहम्' इति । प्रकृतिं च यथोक्ताम् अविद्यालक्षणाम्, गुणैः स्वविकारैः सह निवर्तिताम् अभावमापादिताम् विद्यया । सर्वथा सर्वप्रकारेण वर्तमानोऽपि स भूयः पुनः पतितेऽस्मिन् विद्वच्छरीरे देहान्तराय नाभिजायते नोत्पद्यते । देहान्तरं न गृह्णातीत्यर्थः । अपिशब्दात् किमु वक्तव्यं स्ववृत्तस्थो न जायते इत्यभिप्रायः ॥ भा॰ पा॰ २१०.

१३८. समाधिलाभे साधनान्यधिकृत्य प्रस्थानसालक्षण्य-वैलक्षण्ये चिन्त्ये । तत्र योगसूत्रम् –

तपःस्वाध्यायेश्वरप्रणिधानानि क्रियायोगः ॥ २–१

इति । तदेतत् सर्वं गीताशास्त्रेऽनुमोदितम् । दृश्यते हि अत्रापि वाङ्मनःकायतपसाम्, स्वाध्यायाभ्यासस्य, कर्मयोगस्य च उपदेशः । विशिष्य च –

स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ॥ १८–४६

इति स्वकर्मणा ईश्वराभ्यर्चनलक्षणो भक्तियोग इति । नात्र वक्तव्य-मवशिष्यते ॥

१३९. योगशास्त्रस्य चतुर्व्यूहत्वमङ्गीकृतं तत्प्रवर्तकैः –

हेयं दुःखमनागतम् ॥ २–१६.
द्रष्टृदृश्ययोः संयोगो हेयहेतुः ॥ २–१७.
स्वस्वामिशक्त्योः स्वरूपोपलब्धिहेतुः संयोगः ॥ २–२३.
तस्य हेतुरविद्या ॥ २–२४.
तदभावात् संयोगाभावो हानम्, तद् दृशेः कैवल्यम् ॥ २–२५.
विवेकख्यातिरविप्लवा हानोपायः ॥ २–२६

इति ॥

[ दुःखम्, दुःखहेतुः, दुःखहानम्, दुःखहानोपायः – इत्येतत्प्रतिपादनात् शास्त्रं चतुर्व्यूहम् – इत्युक्तं भवति ॥ ]

यद्यपि क्षेत्रक्षेत्रज्ञ(प्रकृतिपुरुष)संयोगः पुरुषस्य जन्महेतुः (गी. १३-२६) – कार्यकरणारम्भकत्वेन प्रकृतेः, सुखदुःखभोक्तृत्वेन पुरुषस्य च संसारकारणत्वम् (गी. १३–२०), प्रकृतिस्थत्वाख्या अविद्या, गुणसङ्गलक्षणश्च कामः (गी. १३–२१) – इत्येवंप्रकारेण संयोगः पुरुषस्य विविधजन्मकारणम् – इति गीताशास्त्रेऽप्यनुमतम्, तथापि पुरुषः परमार्थतः परमात्मैव, प्रकृतेर्विविच्य तद्वेदनमेव (गी. १३–२३) प्रकृतेरभावगमनपूर्वकम् (गी. १३–३४) परमात्मभावप्राप्तिलक्षणमोक्षहेतुः, न तु केवलं प्रकृतिपुरुषविवेकः, पुरुषस्य केवलीभावो वा, यथाहुर्योगाः – इत्यस्ति प्रस्थानवैषम्यमिति विज्ञेयम् ॥

१४०. विवेकख्यातिर्हानोपाय इत्यभ्युपगम्य, सा च ख्यातिः केनोपायेन सिध्यतीत्यत्र योगशास्त्रविदः –

योगाङ्गानुष्ठानादशुद्धिक्षये ज्ञानदीप्तिरा विवेकख्यातेः ॥ २–२८.

[ अनुष्ठानं विवेकख्यातिप्राप्तिकारणम्, अशुद्धेर्वियोगकारणं च इत्यर्थः ॥ ]

गीताशास्त्रे तु –

(१) तं विद्याद्दुःखसंयोगवियोगं योगसंज्ञितम् ॥ ६–२३.

(२) प्रशान्तमनसं ह्येनं योगिनं सुखमुत्तमम् ।
उपैति शान्तरजसं ब्रह्मभूतमकल्मषम् ॥ ६–२७.

इति न केवलम् अशुद्धिक्षयः दुःखहानिश्च, किं तु उत्तमसुखप्राप्तिरपि ; एवं न केवलं स्वरूपप्रतिष्ठत्वम् किं तु ब्रह्माभिन्नस्वात्मन्यवस्थानमपि योगानुष्ठानेन परिपक्वेन ; तादृशात्मन्येव प्रशान्तमनस्त्वात् साधकस्य ॥

अपि च नैकान्तेन योगाङ्गानुष्ठानमेव दुःखहानौ, स्वरूपप्रतिष्ठायां चोपायः, किं तर्हि परमार्थवस्तुविवेकलक्षणं सांख्यं च तत्रोपायत्वेन गीताशास्त्रे अभ्युपगम्यते –

(३) एषा तेऽभिहिता सांख्ये बुद्धिर्योगे त्विमां शृणु ।
बुद्धया युक्तो यया पार्थ कर्मबन्धं प्रहास्यसि ॥ २–३९.

[भाष्यम् – एषा ते तुभ्यम् अभिहिता उक्ता साङ्ख्ये परमार्थवस्तुविवेकविषये बुद्धिः ज्ञानं साक्षात् शोकमोहादिसंसारहेतुदोषनिवृत्तिकारणम् । योगे तु तत्प्राप्त्युपाये निःसङ्गतया द्वन्द्वप्रहाणपूर्वकम् ईश्वराराधनार्थे कर्मयोगे कर्मानुष्ठाने समाधियोगे च इमाम् अनन्तरमेव उच्यमानां बुद्धिं शृणु । तां बुद्धिं स्तौति प्ररोचनार्थम् – बुद्धया यया योगविषयया युक्तो हे पार्थ, कर्मबन्धं कर्मैव धर्माधर्माख्यो बन्धः कर्मबन्धः । तं प्रहास्यसि ईश्वरप्रसादनिमित्तज्ञानप्राप्त्यैव इत्यभिप्रायः ॥ भा. पा. २७. ]

इति सांख्यस्य साक्षादेव दुःखहानविवेकप्राप्त्युपायत्वेन, समाधियोगस्य च परम्परयैव साधनत्वेन स्वीकारात् ॥

१४१. अथ योगाङ्गानि योगदर्शनाभिमतानि –

यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टावङ्गानि ॥ २-२९
इत्यारभ्य

तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः ॥ ३–३

[यो. भाष्यम् – ध्यानमेव ध्येयाकारनिर्भासं प्रत्ययात्मकेन स्वरूपेण शून्यमिव यदा भवति ध्येयस्वभावावेशात् तदा समाधिरित्युच्यते ॥ पा. ११९. ]

इत्येतदन्तं विवृतानि । तान्येतान्यङ्गानि गीतासु पञ्चमे षष्ठे चोक्तानि । अत्र चास्माभिः ध्यानयोगविवेके (पा. ८४) समुदाहृतानि.हानुसंधेयानि । तत्र तत्र योगशास्त्रे वर्णिताः संयमफलभूता विभूतयस्तु

नात्र शास्त्रे परामृष्टानि इति तद्विषये न किञ्चिदत्र वक्तव्यम् । एवं समाधिजसिद्धिविषयेऽपि । न हि प्रवृत्तिनिवृत्तिलक्षणधर्मद्वयविचारे तान्युपयुज्यन्ते, मुमुक्षुभिरर्थ्यन्ते वा इति ॥

समाध्यन्तान्तिमाङ्गत्रयविषये त्विह किञ्चिद् वक्तव्यमस्ति –

त्रयमेकत्र संयमः ॥ ३–४

इति धारणा ध्यानम् समाधिरिति त्रयम् एकविषयम् संयम इत्युच्यते– इति योगशास्त्रविदां परिभाषा । गीतासु तु संयमशब्दो नैवमर्थे प्रयुक्तः ॥

(1) 'तानि सर्वाणि संयम्य' (२–६१), 'श्रोत्रादीनीन्द्रियाण्यन्ये संयमाग्निषु जुह्वति' (४–२६), 'सर्वाणीन्द्रियकर्माणि प्राणकर्माणि चापरे । आत्मसंयमयोगाग्नौ जुह्वति ज्ञानदीपिते '(४–२७) इत्यादिस्थलेषु अपरिभाषितस्यैव संयमशब्दस्य यौगिकार्थे प्रयोगदर्शनात् ॥

तज्जयात् प्रज्ञालोकः ॥ ३–५.

[ संयमजयात् समाधिप्रज्ञाया आलोको भवति इत्यर्थः ॥ ]

त्रयमन्तरङ्गं पूर्वेभ्यः ॥ ३–७.

[ धारणाध्यानसमाधित्रयम् संप्रज्ञातसमाधेर्यमाद्यपेक्षया अन्तरङ्गम् इत्यर्थः ॥ ]

तदपि बहिरङ्गं निर्बीजस्य ॥ ८ ॥

इति च योगाः ॥

अत्र गीताशास्त्रे समाधेः सबीजनिर्बीजत्वविवेको नादृतः । न च समाधिप्रज्ञाशब्दः परतन्त्रे इव प्रत्ययविशेषे प्रयुज्यते । योगशब्दश्च आत्मानात्मनोः सत्यानृतयोः विवेकप्रज्ञा – इत्यस्मिन्नर्थे एव प्रयुज्यते । तदेतस्या वैशद्यार्थं श्लोकद्वयमुदाहृत्य इममध्यायमुपसंहरामः –

(२) श्रुतिविप्रतिपन्ना ते यदा स्थास्यति निश्चला ।
समाधावचला बुद्धिस्तदा योगमवाप्स्यसि ॥ २-५३.

भाष्यम् – मोहकलिलात्ययद्वारेण लब्धात्मविवेकजप्रज्ञः कदा कर्मयोगजं फलं परमार्थयोगम् अवाप्स्यसि इति चेत् तच्छृणु – श्रुतिविप्रतिपन्ना अनेकसाध्यसाधनसंबन्धप्रकाशनश्रुतिभिः श्रवणैः विप्रतिपन्ना नानाप्रतिपन्ना विक्षिप्ता सती ते तव बुद्धिः, यदा यस्मिन् काले स्थास्यति स्थिरीभूता भविष्यति निश्चला विक्षेपचलनवर्जिता सती । समाधौ – समाधीयते चित्तम् अस्मिन् इति समाधिरात्मा ; तस्मिन् आत्मनि इत्येतत् । अचला तत्रापि विकल्पवर्जिता इत्येतत् । बुद्धिः अन्तःकरणम् । तदा तस्मिन् काले योगम् अवाप्स्यसि विवेकप्रज्ञां समाधिं प्राप्स्यसि ॥ भा. पा. ३३.

अत्र यदैव चित्तम् 'आत्मैवेदं सर्वं परमार्थतः' इति आत्मसत्यत्वम् अनुबुध्यते, तदैव समाधीयते नान्यथा इत्यतः समाधिर्मुख्यार्थत आत्मैव, तद्विषया निर्विकल्पा प्रज्ञापि समाधिशब्देन योगशब्देन चोच्यते इति भाष्यप्रामाण्यादवगम्यते ॥

(२) स्थितप्रज्ञस्य का भाषा समाधिस्थस्य केशव ।
स्थितधीः किं प्रभाषेत किमासीत व्रजेत किम् ॥ २-५४.

भाष्यम् – प्रश्नबीजं प्रतिलभ्य लब्धसमाधिप्रज्ञस्य लक्षणबुभुत्सया अर्जुन उवाच –

स्थिता प्रतिष्ठिता 'अहमस्मि परं ब्रह्म' इति प्रज्ञा यस्य स स्थितप्रज्ञः । तस्य का भाषा ? किं भाषणं वचनम् ? कथमसौ परैर्भाष्यते ? समाधिस्थस्य समाधौ स्थितस्य हे केशव । स्थितधीः स्थितप्रज्ञः स्वयं वा किं प्रभाषेत ? किमासीत ? व्रजेत किम् ; आसनं व्रजनं वा तस्य कथम् ? – इत्यर्थः । स्थितप्रज्ञस्य लक्षणम् अनेन श्लोकेन पृच्छति ॥ भा. पा. ३३.

अत्रापि 'अहमस्मि परं ब्रह्म' इति प्रज्ञैव 'समाधिप्रज्ञा' इति व्यपदिश्यते इति स्पष्टम् ॥

अन्योऽपि श्लोकः श्रीभगवतो प्रतिवचनरूप इहार्थतोऽनुसंधेयो भवति –

श्रीभगवानुवाच –

(३) प्रजहाति यदा कामान् सर्वान् पार्थ मनोगतान् ।
आत्मन्येवाऽऽत्मना तुष्टः स्थितप्रज्ञस्तदोच्यते ॥ २–५५.

भाष्यम् – प्रजहाति प्रकर्षेण जहाति परित्यजति यदा यस्मिन् काले सर्वान् समस्तान् कामान् इच्छाभेदान् हे पार्थ मनोगतान् मनसि प्रविष्टान् हृदि प्रविष्टान् । सर्वकामपरित्यागे तुष्टिकारणाभावात् शरीरधारणनिमित्तशेषे च सति उन्मत्तप्रमत्तस्येव प्रवृत्तिः प्राप्ता – इत्यत उच्यते । आत्मन्येव च प्रत्यगात्मस्वरूपे एव आत्मना स्वेनैव बाह्यलाभनिरपेक्षः, तुष्टः ; परमार्थदर्शनामृतरसलाभेन अन्यस्मादलंप्रत्ययवान्, स्थितप्रज्ञः स्थिता प्रतिष्ठिता आत्मानात्मविवेकजा प्रज्ञा यस्य स स्थितप्रज्ञो विद्वान् तदा उच्यते । त्यक्तपुत्रवित्तलोकैषणः संन्यासी आत्माराम आत्मक्रीडः स्थितप्रज्ञ इत्यर्थः ॥ भा. पा. ३३–३४.

अयं त्वत्र पर्यवसितोऽर्थः – आत्मानात्मविवेकजा प्रज्ञैव अत्र समाधिप्रज्ञा उच्यते । आत्मानात्मविवेकस्तु अन्यत्र भाष्ये –

(1) यथाशास्त्रं क्षेत्रक्षेत्रज्ञलक्षणभेदपरिज्ञानपूर्वकं प्राग्दर्शितरूपात् क्षेत्रात् मुञ्जादिव ईषिकां यथोक्तलक्षणं क्षेत्रज्ञं प्रविभज्य 'न सत्तन्नासदुच्यते' इत्यनेन निरस्तसर्वोपाधिविशेषं ज्ञेयं ब्रह्म स्वरूपेण यः पश्यति, क्षेत्रं च मायानिर्मितहस्तिस्वप्नदृष्टवस्तुगन्धर्वनगरादिवत् असदेव सदिवावभासते इत्येवंनिश्चितविज्ञानो यः तस्य यथोक्तसम्यग्दर्शनविरोधात् अपगच्छति मिथ्याज्ञानम् ॥ भा. पा. २१३.

इति । अधिकं तु ज्ञानयोगविवेकादधिगन्तव्यम् ॥

(2) तस्यैवंलक्षणस्य स्थितप्रज्ञस्य अविद्याकृतसर्वकामप्रहाणेन सर्वकर्मत्याग एव लक्षणम् "यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः। अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते ॥ यदा सर्वे प्रभिद्यन्ते हृदयस्येह ग्रन्थयः। अथ मर्त्योऽमृतो भवत्येतावद्ध्यनुशासनम् ॥ (का. २–३–१४, १५) इति च श्रुतेः ॥

(3) तस्यैवममृतत्वं प्राप्तस्य बाह्यविषयरसलाभे प्रवृत्तिर्नैव भवेत् "रसो वै सः। रसꣳ ह्येवायं लब्ध्वाऽऽनन्दी भवति" (तै. २-७) इति श्रुतेः ॥

(4) स चैवंविधः स्थितप्रज्ञः आत्मानन्दरसपानेनैव सर्वदा परितुष्टो वर्तते – "स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नात्मरतिरात्मक्रीड आत्ममिथुन आत्मानन्दः स स्वराट् भवति ॥" (छां. ७-२५-२) इति श्रुतेः ॥

एवंविधस्यात्मैव सत्यम् इति लब्धविवेकप्रज्ञस्य चित्तमचित्ततां याति, बाह्यद्वैतस्य सर्वथा आत्मानन्यत्वनिश्चयादित्युक्तमभियुक्तैः ; एष एव चात्मा समाधिर्मुख्यवृत्तित इति च –

(2) आत्मसत्यानुबोधेन न सङ्कल्पयते यदा।
अमनस्तां तदा याति ग्राह्याभावे तदग्रहम् ॥ गौ. का. ३-३२.
सर्वाभिलापविगतः सर्वचिन्तासमुत्थितः।
सुप्रशान्तः सकृज्ज्योतिः समाधिरचलोऽभयः ॥ ३-३७

इति। अत एवेदृशसमाधिप्रज्ञां प्राप्तस्य स्वदृष्ट्या प्रज्ञा नाम नात्मधर्मभूता, न च तत्र ज्ञानज्ञेयविभागः, ज्ञातृज्ञानज्ञेयविकल्परहितनिर्वि-

कल्पज्ञानमात्रत्वात् । उदाहृतं भाष्यवचनम् 'बुद्धिः स्थास्यति निश्चला' इति गीतावचनव्याख्यानरूपम् 'निश्चला विक्षेपचलनवर्जिता सती समाधौ समाधीयते चित्तमस्मिन्निति समाधिरात्मा – तस्मिन्नात्मनीत्येतद् अचला तत्रापि विकल्पवर्जिता इत्येतत् । एतदपि विस्पष्टमुक्तमभियुक्तैः–

(3) अकल्पकमजं ज्ञानं ज्ञेयाभिन्नं प्रचक्षते ।
ब्रह्मज्ञेयमजं नित्यमजेनाजं विबुध्यते ॥ गौ. का. ३–३३

इति ॥

एषैव च स्थितिर्मध्यमाधिकारिभिर्योगाङ्गानुष्ठानलब्धा अभिव्यज्यते । यदप्युक्तम् –

मनसो निग्रहायत्तमभयं सर्वयोगिनाम् ।
दुःखक्षयः प्रबोधश्चाप्यक्षया शान्तिरेव च ॥ गौ. का. ३–४०

इति च । अतः सुमहद् वैलक्षण्यं गीताशास्त्रोक्तसमाधिप्रज्ञायाः योगदर्शनोक्तसमाधिप्रज्ञात इति सर्वं शिवम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यवरेण्यश्रीपूज्यपादश्रीमच्छङ्करभगवच्चरणस्मरण-
परिचयावाप्तवेदान्तप्रवेशेन श्रीबोधानन्देन्द्रसरस्वतीशिष्येण
सच्चिदानन्देन्द्रसरस्वत्याख्येन भिक्षुणा प्रणीते
गीताशास्त्रार्थविवेके योगदर्शनोपसंग्रहो नाम द्वाविंशतितमोऽध्यायः

---

# मुख्यशब्दानां अक्षरानुक्रमणिका

अत्र दत्ताः पत्रपार्श्वसंख्याः


अंशः (भगवतः), १४४.

अंशचतुष्टयम् (कर्म), ६१.

अज्ञानम्, ४२, ११२–११५.

अनावृत्तिः १५२.

अपरा प्रकृतिः, १४२, १४३, १४४.

अभ्यासः, ८७.

अभ्यासः, अभ्यासयोगः, ८२, ८६.

अविवेकः, ११३, ११४, ११५.

अविवेकजः संशयः, तज्जन्यं मिथ्याज्ञानं च, ११३, ११४.

अव्यक्तम्, १६४, १६५.

आवृत्तिः, १५२.

आसुराः, ५६, ५७.

उपाध्युपमर्दः, १५३.

उपासनम्, ३२, ३३, ३५, ३६; (यथावस्तु चिन्तनम्), ३४, ३५.

कर्म, ६२, ६८, ६९, ७२, ७३, ७४, ७५; (ज्ञानिनः) ११८.

कर्मयोगः, ६१, ६३, ६४, ६५, ७१.

कर्मसंन्यासः, (शास्त्रीयकर्मत्यागः) २७; (सर्वकर्मसंन्यासः) ७०; (अज्ञानाम्), १७, ७२; (ज्ञानिनः) ७२; (कर्म कुर्वाणस्यैव ज्ञानिनः) ७२.

काम्यं कर्म, ५९.

कामः, ५८, ११३.

कृतार्थलक्षणानि, ११७, ११८.

क्रममुक्तिः, १५१, १५३.

क्रियाकारकफलभेदबुद्धिः, १७.

क्षेत्रम्, १०२, १०३.
क्षेत्रक्षेत्रज्ञज्ञानम्, १०८, १०९, ११०.
क्षेत्रज्ञः, १०२, १०५, १०७, १०८.
क्षेत्रज्ञेश्वरैक्यम्, १०८.
गीताः, १, २.
गीताशास्त्रम्, १, २, ६, १०, ४५.
गुणत्रयम् (मायिकम्), ५३.
गुणाः, (सत्त्वादयः) ४९; (सुखदुःखमोहाः) ५०; (इन्द्रियाणि विषयाश्च) ५१.
जीवः, १४४, १४५, १४७.
ज्ञानम् (आत्मानात्मविवेकः) ४१; (अमानित्वादि) ४१, ४२, १०९; (अन्तःकरणवृत्तिः) ४४; (अवगतिः) १२९, १३०; (आत्मनः स्वरूपभूतम्) १०६.
ज्ञाननिष्ठा, ४, १२८, १२९, १३०, १५४, १५५.
ज्ञानप्राप्तिः, ९३.
ज्ञानी, ११५.
ज्ञेयम्, १०४, १०५.
त्यागः, ६८, ६९.
ध्यानम्, (आत्मदर्शनाय) २९; (निरुपाधिकब्रह्मणः ध्यानम्)(ओंकारद्वारेण) ८०; (शास्त्रचोदितम्) ३१, ३२, ३४, ३५, ३६; (ज्ञाननियमनार्थम्) ३२.
नित्यकर्माणि, ६०, ६१.
निवृत्तिधर्मः, १५४.
परं ब्रह्म, ५, ६.
परमपुरुषार्थः, १४८.
परमभक्तः, १२५.
पुरुषः, १६७, १६८, १७९.
प्रकृतिः, (प्रधानम् माया) ४९, ५०, ९७, १६८–१७०.
प्रकृतिपुरुषसंयोगः, ९६, ९८, १६२, १६६, १७१.
प्रकृतिपुरुषविवेकः, १६१, १८०.

प्रकृतिमोक्षः, ९६.

प्रज्ञा, १७८, १८५-१८७.

प्रपत्तिः (शरणागतिः) ३८, ३९, १२७, १२८.

प्रवृत्तिः, ४.

फलाभिसन्धित्यागः, ६०, ६४.

बुद्धियोगः, १४१.

ब्रह्मनिष्ठा, १७.

ब्रह्मयोगः, ८८.

ब्रह्मसंपत्तिः, १४७.

भक्तिः, ३७, ९३, ९४, ९५; (ज्ञानिनः) ३८; (भक्तियोगः) ८९.

भगवच्छब्दः, १३२, १३३.

भगवतो निरुपाधिकं रूपम्, १३४, १३६; (तस्य) सोपाधिकं रूपम्, १३५, १३७, १३८.

भगवतः परो भावः, १३९, १४०.

भगवतः परमगुरुत्वम्, १४०.

भगवत्प्राप्तिसाधनम्, ९५.

भगवान्, १३४.

भजनम्, (भगवत्कर्तृकम्) ३८.

मिथ्याज्ञानम्, ९६, ९८, १११, ११२.

मुक्तिः, मोक्षः, १४८, १५१, १७१, १७२.

मोहः, १२, १३, ११३, ११४.

यज्ञादिकर्म, ६८, ६९, १६२.

योगः, (ज्ञाननिष्ठा) २०; (भगवत ऐश्वर्यम्) २१; (उपासनम्) २१; (ध्यानयोगः) २३, २४.

योगशास्त्रम्, १९..

योगानां योगत्वेनार्थवत्त्वं च, ९१, ९२.

राजसतामसबुद्धी, ५५.

वासुदेवः, १, ५, ६.

विदेहमुक्तिः, १२१, १२२, १४८.
विभूत्युपासनम् , ७६, ७७.
विवेकः, ९९, १६३, १८६, १८७.
विश्वरूपोपासनम् , ७८, ७९.
वृत्तिकारः, ७, ८, ९, १०.
शोकः, १३, १४.
शोकमोहौ, ११, १३, १४.
संयमः, १८४.
संसारबीजम् , ११, १४.
सद्योमुक्तिः, १४८, १४९, १५३.
समाधिः, १३८, १७८, १८३–१८५, १८८.
संन्यासः, (ज्ञाननिष्ठा) २२; (कर्मत्यागः) २५, ६७.
साङ्ख्यम् , १५, १७.
साङ्ख्यदर्शनम् , १६, १७, १८, १५९.
साङ्ख्याः, १७.
साङ्ख्यो योगः, १७.
सुखम् , (आत्मस्वरूपभूतम् ) १४९.

# ग्रन्थसंस्करणम्

ग्रन्थकर्तुः, सीसकाक्षरसंयोजकस्य, मुद्रितदोषशोधनकर्तॄणां च भ्रमप्रमादादिहेतोः सञ्जाता अत्र बहवो दोषाः। ते च सुधीभिः कृपया संशोध्य मह्यमपि यदि निवेद्यन्ते तर्हि आधमर्ण्यसूचनपूर्वकं पुनर्मुद्रणसमये यथायोगं विनियोक्ष्येरन् यथायं ग्रन्थः सर्वाङ्गसुन्दरो भूत्वा वाचकानाम् इतोऽप्यधिकलाभदायको भवेत्। अत्र प्रधानदोषा एव शोध्यन्ते, संयोजनं च दिग्दर्शनार्थमिति शम्॥

अ – अधरोत्तरं गणते, टि – टिप्पणे

| पुटे | पङ्क्तौ | स्थाने | पठितव्यम् |
|---|---|---|---|
| २ | १० | इत्यादिरूपम् | इत्येतादृशम् |
| ३ | अ. ९ | पर्व(चतुष्टयात्मकम्) | अवान्तरपर्व |
| ३ | अ. ८ | यावद् द्वाचत्वारिंशाध्यायः | यावद्द्वा.... |
| ४ | टि. | विहितनिषिद्ध | विहितानुष्ठाननिषिद्धत्याग |
| ४ | २ | प्रतिपादनाभावात् | प्रतिपादनस्याभावात् |
| ९ | ३ | साक्षात्कृत्वा | साक्षात् कृत्वा |
| ९ | ८ | 'क्वचिदपि' | (पुनःपठितोऽयम्) |
| ११ | १३ | प्रवृत्तिः | मनःप्रवृत्तिः |
| ११ | अ. ५ | तावत्, | तावत् |
| १२ | अ. ८ | बुद्ध्या। द्य | बुद्ध्याद्य |
| १५ | ५ | 'तत्र तत्रात्रग्रन्थे निर्दिश्यमाना' | (त्याज्योऽयं वाक्यभागः) |
| १५ | ९ | दर्शनयोः प्रकाशित | दर्शनयोः प्रतिपादितयोः |
| २० | १० | इति | इति। |
| २१ | अ. ६ | व्यपदेश्यः | व्यपदेश्यम् |
| २९ | १० | भवति, | भवति; तदर्थं च |
| २९ | ११ | शब्दाविव | शब्दयोरिव |
| २९ | ११ | अर्थभेदोऽपि | अर्थभेदोऽप्यत्र |

| पृष्ठे | पङ्क्तौ | स्थाने | पठितव्यम् |
|---|---|---|---|
| ३१ | ६ | मात्रा | मात्र |
| ४२ | अ. ५ | यथोक्तेन | अनेन |
| ४३ | १ | नोपदिश्यते । | नोपदिश्यते, |
| ४३ | ४ | किं तु .... ज्ञेयम् | (इदं वाक्यम् एवं परिवर्तितव्यम्–) "किं तु मिथ्याज्ञानं मिथ्याज्ञानकार्यत्वान्मिथ्याज्ञान-शब्दार्हं मानित्वादि च – इत्युक्तं भवति ।" |
| ४४ | १ | तादात्म्यभाव | तादात्म्यभावना |
| ५२ | २ | गुणानाम्. | गुणानां |
| ५२ | ३ | 'किं च तेषाम्...फलम्' | (इत्थं विपरिवर्तितव्यं वाक्यम्–) "किं च तेषु प्रत्येकं प्रवृद्धेषु मरणं प्राप्तस्य पुरुषस्य प्रेत्य फलं भवेत् ?" |
| ५२ | अ. २ | व्यक्तयश्च | वृत्तयश्च |
| ५२ | अ. १ | इति | इति । |
| ५३ | अ ३ | भ्यासादेव | भ्यासेव |
| ५५ | ४ | संजात.... | सञ्जातेन तत्संयोगेन गुणवृत्तिपरवशः |
| ६० | ७ | मन्तव्यम् | 'मन्तव्यम् । लोकान्तरेष्वपि कर्मफलसिद्धिसत्त्वात् । |
| ६० | १२ | भगवान् ॥ | भगवान् । मानुषे लोके वर्णाश्रम-कर्माणीति विशेषः ॥ |
| ६२ | १० | सन्धित्यागं....सूचितम् | सन्धित्यागः ईश्वराभ्यर्चनं च सूच्येते । |
| ६४ | ११ | गुणकृत | गुणत्रयकृत |
| ६४ | अ. २ | १८–५६, पा. २८५. | १८–४६, पा. २७५. |
| ६५ | ३ | त्रिगुणत्वादिकृतो | –कृतम् |
| ६७ | ३ | संन्यासफलत्यागयोरेव | संन्याससर्वकर्मफलत्यागावेव |
| ७६ | अ. ५ | साधकानां | (त्यक्तव्यमिदम्) |

| पुटे | पङ्क्तौ | स्थाने | पठितव्यम् |
|---|---|---|---|
| ७८ | अ. ११ | (इत्येतदन्तं) यावत् | (अनपेक्षितं 'यावत्' इति) |
| ८० | अ. ३ | ऐकार्थ्यत्वाच्च | ऐकार्थ्याच्च |
| ८२ | ११, १२ | अनुष्ठीयमानस्योपासनस्य | अनुष्ठानादुपासकस्य |
| ८२ | १२ | तस्मिन्नेव | तस्मिन्नेव परमपुरुषे |
| ८२ | अन्त्यपङ्क्तौ | गृह्यते ॥ | गृह्यते ॥ इति |
| ८४. | टि. १ | ४-२-२१ | ४-२-२१, ४-३-४. |
| ८७ | १५ | व्याख्यातः । | व्याख्यातः, |
| ८८ | उपान्त्यपङ्क्तौ | परमानन्दात्मनि.... | 'परमानन्दात्मस्वरूपापत्तिरूपा योगशब्दशब्दिता इति स्पष्टम्' |
| ९१ | १ | इत्येवं रजसः.... | इत्येवं स्मरणात् । |
| ९१ | १ | तथापि | तत्रापि |
| ९५ | अ. ५ | साधनेष्वपि | साधनेषु |
| १०३ | १० | व्याख्यातः | व्याख्यातम् |
| १०३ | ११ | 'यद्यपि....अनुसंधातव्यम्' | (त्याज्योऽयं ग्रन्थभागः) |
| १०४ | ३ | शब्दवाच्यत्वे | शब्दावाच्यत्वे |
| १०४ | टि. ७ | सर्वतः पाणिपादम् | सर्वतःपाणिपादम् |
| १०४ | टि. ६ | सर्वतः श्रुतिमल्लोके | सर्वतःश्रुतिमल्लोके |
| १०६ | ७ | संयोजयितव्यम् – | |

"एतदेवोत्तरत्र (१३-२२) सङ्क्षिप्य वक्ष्यते क्षेत्रक्षेत्रज्ञसतत्त्वम्

(S) उपद्रष्टाऽनुमन्ता च भर्ता भोक्ता महेश्वरः ।

परमात्मेति चाप्युक्तो देहेऽस्मिन् पुरुषः परः ॥ १३-२२

इति । यत्तु तत्र 'देहेऽस्मिन्' इत्येकवचनम्, तदनेनैकार्थ्याय सर्वदेहोपलक्षणत्वेन नेयम् । अत एव हि तत्र भाष्यम् – "क्वासौ ? अस्मिन् देहे पुरुषः परः अव्यक्तात् । 'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः' इति यो वक्ष्यमाणः, क्षेत्रज्ञं चापि मां विद्धि' इत्युपन्यस्तो व्याख्यायोपसंहृतश्च ॥" इति ॥

| पुटे | पङ्क्तौ | स्थाने | पठितव्यम् |
|---|---|---|---|
| १०६ | अ. ७ | तदपि | तामपि |
| १०८ | ७ | तदाशङ्क्याह | तदाशङ्क्याऽऽह प्रकृत्येति |
| १०८ | अ. १ | इति च | इति |
| १०९ | ८ | प्रकृतिविशेषलक्षणं | प्रकृतिपरिणामविशेषलक्षणं |
| ११० | अ. ३ | प्रत्यक्षादिप्रमाणेष्विव | प्रत्यक्षादिप्रमाणैरिव |
| ११४ | ९ | इति । | इति |

---

१०००—२०-१२-१९६५. अध्यात्मप्रकाशमुद्रणालयः, होळेनरसीपुरम्.

## शुद्धशाङ्करप्रक्रियाप्रकाशकाः

# कतिचन वेदान्तग्रन्थाः

## BACK - TO - SHANKARA SERIES

*Editor and Commentator :*

SWAMI SATCHIDANANDENDRA SARASWATI

**ईशकेनकाठकमुण्डकोपनिषदः, तैत्तिरीयशीक्षावल्ली च - सटिप्पणभाष्ययुताः -**

The Isa, Kena, Kathaka and Mundaka Upanishads and the Shikshavalli of the Taittiriya, critically edited separately with the Bhashya and Notes.

**आनन्दवल्ली भृगुवल्ली च - सभाष्या, भाष्यार्थविमर्शिनीसहिता -**

Anandavalli and Bhriguvalli with an elaborate original commentary. Contains a critical review of all mis-interpretations as also of objections of adverse schools.

**माण्डूक्यरहस्यविवृतिः - उपनिषदो गौडपादकारिकाणां च अभिनवा व्याख्या -**

This is the first attempt of its kind to present both Gaudapada and Shankara in their true perspective.

**सुगमा - अध्यासभाष्यस्य नवीनव्याख्या -**

A new original sub-commentary on the Adhyasa Bhashya pointing out a straight and smooth way to the essentials of the Vedanta method. All later undesirable accretions cleared out of the way.

**सूत्रभाष्यार्थतत्त्वविवेचनी -**

A new commentary on Shankara's Bhashya on the *Jignasa* and the *Janmadi* Adhikaranas bringing out the salient features of Shankara's system and its method.

*Apply for descriptive catalogue to*

ADHYATMA PRAKASHA KARYALAYA,
HOLENARSIPUR.
(Hassan District, Mysore State, India.)